# वैयाकरणसिद्धान्तमञ्जूषास्थो व्यञ्जनानिर्णयः ।

(अस्मिन्वृत्तिवार्तिकग्रन्थे व्यञ्जनावृत्तिनिर्णयस्य प्रारम्भप्रतिज्ञातस्यापि सकलादर्शादर्शनात्तन्निरूपणस्यात्यावश्यकत्वाच्च नैयायिकप्रबन्धेषु तदनादरेण वैयाकरणग्रन्थेषु तदादरेण नागेशभट्टविरचितवैयाकरणसिद्धान्तमञ्जूषास्थ एव व्यञ्जनानिर्णयो लिख्यते –)

मुख्यार्थसंबद्धासंबद्धसाधारणमुख्यार्थबाधग्रहाद्यप्रयोज्यप्रसिद्धाप्रसिद्धार्थविषयकधीजनकत्वं व्यञ्जना । सा चेयं शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात् । 'अनया कटाक्षेणाभिलाषो व्यञ्जितः' इति सर्वजनप्रसिद्धेस्तस्यां चेष्टावृत्तित्वस्याप्यावश्यकत्वाच्च । एतेन—'अर्थादीनां न व्यञ्जकत्वम् । किंतु पदस्यैव' इत्यपास्तम् ।

'रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रमाकुलाच्छादयते दक्षिणं नयनं हरेः ॥'

इत्यादौ हरिपदेन 'दक्षिणनयनस्य सूर्यात्मकत्वम्, तन्निमीलनेन सूर्यास्तः, तेन पद्मसंकोचः, तेन पितामहस्थगनम्, तेनाप्रतिबद्धं रतिविलसितम्' इति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थस्यापि व्यञ्जकत्वावश्यकत्वात् ।

'पश्यात्र नलिनीपत्रे बलाका दृश्यतेऽचला ।
रम्ये मारकते पात्रे शुक्तिकेव च निर्मला ॥'

इत्यत्रापि निश्चलत्वेन शुक्त्युपमया चाश्वस्तत्वम्, तेन निर्जनत्वम्, तेन 'तदेवावयोः संकेतस्थानम्' इत्यादिषु क्रमेण प्रतीयमानेषु तत्तदर्थव्यङ्ग्येष्वपि बोध्यम् । पदस्य च तत्तत्स्वार्थबोधने उपरतत्वात्पुनःपुनरनुसंधानकल्पने गौरवम्, तदननुभवाच्च । अनया चार्थबोधे जननीये वक्तृबोद्धव्यवाच्यादिवैशिष्ट्यज्ञानं प्रतिभा च सहकारि तद्बीजनकज्ञानजनकमेव वा । अतो नातिप्रसङ्गः । प्रतिभा च नवनवोन्मेषशालिनी बुद्धिः । तदुक्तम्—

'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।'

इति । नवनवोन्मेषो जन्मान्तरीयतद्बीजनकत्वज्ञानजन्यसंस्कारोद्बोधः ।

'वक्त्रादिवैशिष्ट्यसहकारेण तज्जनिका बुद्धिः प्रतिभा' इति फलितम्। एवं च शक्तिरेतज्जन्मगृहीतैवार्थबोधिका, व्यञ्जना तु जन्मान्तरगृहीतापि, इत्यपि शक्तेरस्या भेदकम्। इदमेवाभिप्रेत्य 'व्यञ्जना स्वरूपसती हेतुः' इति प्रवादः। यद्यपि प्रागुक्तरीत्या लक्षणातोऽपि भेदः सिद्धः, तथापि प्रकारान्तरेणापि भेदं वक्तुं 'मुख्यार्थ—'इत्याद्युक्तम्। 'पश्यात्र नलिनीपत्रे—' इत्यादौ वक्तृतात्पर्यविषयीभूतवाच्यार्थबाधाभावेऽपि तज्ज्ञानाभावेऽपि प्राग्दर्शितव्यङ्ग्यप्रतीतेः, मुख्यार्थबाधज्ञानसत्त्वे तदप्रतीतेश्च न व्या(वैय)ञ्जनिकबोधे तस्य सहकारित्वम्। एवं 'गतोऽस्तमर्कः' इत्यादेः शिष्येण संध्यावन्दनादेः कर्तव्यत्वाभिप्रायेण गुरुं प्रति प्रयुक्ताद्वक्तृतात्पर्याभावेऽपि प्रतिवेश्यादीनामभिसरणीयक्रमादिबोधस्य वाच्यार्थप्रतीतिपूर्वकस्य वाच्यार्थबाधज्ञानेऽजायमानस्य लक्षणयोपपादयितुमशक्यत्वाच्च। यत्तु—'गतोऽस्तमर्कः' इत्यादौ न व्यञ्जना, एकसंबन्धिदर्शनादपरसंबन्धिस्मरणवदुपपत्तेः, इति, तन्न। असंबद्धव्यङ्ग्यप्रतीतावस्यासंभवात्। किं च 'गतोऽस्तमर्कः' इत्यादिश्रवणोत्तरं 'संध्यावन्दनकर्तव्यत्वं मया स्मृतम्' इत्यनुव्यवसायाभावात्, तत्तानुल्लेखाच्च। 'इदं पदमेतदर्थस्य न वाचकम्, नापि लक्षकम्, नापि स्मारकम्। अपि तु व्यञ्जनया बोधकम्' इति प्रामाणिकव्यवहारेणाप्यतिरिक्ततत्सिद्धेश्च। एतेन—तत्तदर्थानां वक्त्रादिवैशिष्ट्यप्रतिभादिसहकृतमनसैव विशिष्टधीसंभवात्। चमत्कारं प्रति शाब्दस्येव मानसस्यापि चेष्टानुरोधेन हेतुतायाः क्लृप्तत्वाच्च व्यञ्जनासत्त्वे न मानम्। प्रतिभा च तत्तत्पदपदार्थविषयकसंस्कारोद्बोधको बुद्धिविशेषः। तत्र च तत्तदर्थज्ञानं वक्त्रादिवैशिष्ट्यं ज्ञानं च सहकारि—इति परास्तम्॥

'व्यङ्ग्योऽर्थोऽनुमेयः' इति त्वयुक्तमेव, विरुद्धानैकान्तिकेभ्यो व्याप्तिपक्षधर्मतादिनिर्णयाभावेऽपि व्यङ्ग्यार्थप्रतीतेः। किं च—सिद्धिसत्त्वेऽपि व्यङ्ग्यार्थबोधदर्शनेन तत्प्रतिबध्यतावच्छेदककोटौ तत्तद्भेदनिवेशेऽतिगौरवापत्त्याव्या(वैय)ञ्जनिकबोधस्यातिरिक्तत्व एव लाघवम्। अन्यथा शब्दप्रामाण्यस्याप्युच्छेदापत्तिरित्यन्यत्र विस्तरः। बोधकत्वस्य चेष्टायां सत्त्वेऽपि तन्नि-

ष्टबोधकत्वं न शक्तिः, 'चेष्टा शक्ता' इति प्रामाणिकव्यवहाराभावात् । किं तु तज्जन्यबोधे तज्ज्ञानस्य कारणत्वं बोध्यम् । तत्तद्वाचकशब्दस्मरण-द्वारा चेष्टया बोधः—इत्यपि कश्चित् । तन्न । 'चेष्टयैडमूकादिव्यवहारानापत्तेः । तस्यापि जन्मान्तरीयशब्दस्मरणम्' इत्यन्ये ॥

अत एव निपातानां द्योतकत्वमाकर उक्तम् । स्फोटस्य च व्यञ्जयना हर्यादिभिरुक्तैव । द्योतकत्वं च समभिव्याहृतपदशक्तिव्यञ्जकत्वमेव—इति वैयाकरणानामप्येतत्स्वीकार आवश्यकः ॥

इति श्रीनागेशभट्टविरचितायां वैयाकरणसिद्धान्तमञ्जूषायां व्यञ्जनानिरूपणम् ।

श्रीः

# तत्त्वबिन्दुः

सर्वतन्त्रस्वतन्त्रश्रीवाचस्पतिमिश्रकृतः
शाब्दबोधकारणावधारणपरः

काशिकराजकीयसंस्कृतप्रधानपाठशालायाम्
साहित्यशास्त्राध्यापकेन महामहोपाध्याय-
श्रीगङ्गाधरशास्त्रिणा

विषमस्थलटिप्पणीनिवेशनपुरःसरं संशोधितः

काश्याम्
ई० जे० लाजरसकंपन्याख्येन मेडिकलहालनाम्नि
मुद्रालये मुद्रयित्वा प्रकाशितः।

सं. १९५६ वै. व. ७ भौमे

॥ श्रीः ॥

# तत्त्वबिन्दोर्भूमिका।

अथैष प्रकाश्यते तत्त्वबिन्दुर्नाम प्रबन्धः शास्त्ररसिकानां प्रमोदमाधातुम्। अस्य निर्माता किल सर्वतन्त्रस्वतन्त्रप्रतिभः श्रीवाचस्पतिमिश्रो यः प्राग्भवे शाङ्करब्रह्मसूत्रव्याख्यानप्रवृत्तोऽन्तरायतिरस्कृते तत्र महत्यनितरसंपादनीये निजावतारकार्ये भगवता श्रीशङ्कराचार्यपूज्यपादेन वाचस्पतिनाम्ना ऽवतीर्य संपादयितास्यभीप्सितमाकल्पं च सा टीका भुवमलंकुर्यादिति वरेणान्वगृह्यतेति वर्णयन्ति स्म शङ्करदिग्विजये माधवाचार्याः।

अविसंवादितया नु भगवदादेशस्य षट्त्रिंशदुत्तरैकोनविंशतिशततमे १९३६ वैक्रमाब्दे काशिकराजकीयसंस्कृतपाठशालामलंकरिष्णुभिर्निखिलदर्शननदीष्णैर्मदीयगुरुवरश्रीबालशास्त्रिचरणैर्मुद्रयित्वा प्रचारिता भामतीनाम्नी शाङ्करब्रह्मसूत्रभाष्यटीका। अस्यामेव शेषे यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिरिति पद्यं ग्रथितवता ऽन्तरा च तत्रावधारितेषु सिद्धान्तेषु विस्तरेण व्यवस्थापनमेतेष्वेव निबन्धेषु प्रतिज्ञातवता ग्रन्थकारेण चिरादेतदालोचनोत्कलिकाऽऽकुला अभाविषत परीक्षणविचक्षणाः। तेष्वयमेकस्यैव विषयस्य व्यवस्थापको निबन्धः।

स्फोटेऽथ वाक्यचरमाक्षरसर्ववर्णा-
वल्याः पदेषु च निरस्य यथा नवेन।
संस्मारितेष्विह हि वस्तुषु सुप्तिङन्तैः
शाब्दप्रमाजनकता निरधारि मिश्रैः॥

एतत्सिद्धान्तव्यवस्थापनं च मन्ये निगूढाभिसंधिना तटस्थेनेव वस्तुस्वभावप्रतिपादनमुखेन वेदान्तपरमसिद्धान्तमुपपत्तुं

कर्तुकामेन ग्रन्थकर्त्रा कृतम्। तथा हि। तत्त्वमसि अहं ब्रह्मास्मीति महावाक्यार्थधियोर्गुरूपदेशशिष्यानुभवरूपयोश्चिरमुपदिष्टप्रकारेणावर्त्यमानयोरविद्यावरणनिरसनद्वारेण साक्षात्कारहेतुत्वमिति ह्यद्वैतवादिनां मुख्यतमः सिद्धान्तः। तस्य च चरमज्ञानस्य प्रत्यक्षत्वं शाब्दत्वं च दशमस्त्वमसीत्यादाविवेति न तिरोहितं चय्यन्तचिन्तकानाम्। अत एव यत्साक्षादपरोक्षाद् ब्रह्म तं त्वौपनिषदं पुरुषं पृच्छामीति श्रुतिभ्यां ब्रह्मणः साक्षात्काररूपत्वमुपनिषन्मात्रगम्यत्वं च निरणायि। वस्तुतन्त्रत्वे एव च ज्ञानस्य प्रमात्वमिति समन्वयसूत्रे भाष्यकारः। योषा वाव गौतमाग्निः सिंहो माणवक इत्यादिवैदिकलौकिकवाक्यैः समानविभक्तिकपदद्वयसमभिव्याहारबलेन जायमानाऽपि तदर्थयोरभेदान्वयधीः कर्तुमकर्तुमन्यथा वा कर्तुं शक्यत्वेन वस्तुतोऽभेदाभावेन पुरुषतन्त्रतया क्रियारूपैव न तु ज्ञानम्। शुक्ले पटे तदभेदधीस्तु वस्तुमात्रनिबन्धना न व्यत्यासं सहत इति क्रियालक्षणविरहाज् ज्ञानम्। तथैव प्रकृते वस्तुमात्रप्रभवत्वे सत्येव जीवब्रह्माभेदधियो ज्ञानत्वमारोपात्मकत्वे तु क्रियैव सेति। तथा च साक्षात्कारत्वेनेष्टायाश्चरमवृत्तेर्वस्तुनिबन्धनत्वमवश्यमाश्रयणीयम्। अङ्गीकृतं च परैरपि प्रत्यक्षं प्रति विषयस्य कारणत्वम्। तेन प्रमामात्रं प्रति विषयस्य कयाचिदपि प्रणाड्योपस्थितस्य कारणत्वस्वीकारे बाधकाभावः। न चैवमतीतानागतयोः प्रमाऽव्यवहितप्राक्कालिकस्थितिविधुरतया तद्विषयकानुमितिशाब्दधियोरप्रमात्वमापादनीयम्। प्रमां प्रति बौद्धपदार्थानामेव कारणत्वाङ्गीकारेण सत्कार्यवादाङ्गीकारेण वा वस्तुनः प्रमाप्राक्कालिकतायाः सूपपादत्वात्। प्रकृतसाक्षात्कारशाब्दकारणतायाः अपि बुद्धिपरिकल्पिते सविशेषणत्वाभ्युपगमेन तस्यालीकत्वप्रसक्तेरिष्टापत्तिग्रस्तत्वात्। अत एव निर्विशेषमुपक्रम्य श्रुतिः। न तस्य कार्यं करणं च विद्यते इति। लौकिकप्रमात्वं तु व्यवहारदशायामबाध्यविषयत्वरूपमुभयत्रा-

पि तुल्यमित्यलमप्रस्तुतविचारप्रयासेन । एवं स्थिते उपनिषदेकगम्यत्वाद् निर्विशेषस्य प्रकृतमहावाक्यघटकपदवृत्त्योपस्थितिरावश्यकी सा च समभिव्याहृतपदान्तरार्थेन सहान्वयानुपपत्तिप्रतिसंधानसापेक्षेति भवति जघन्यवृत्त्याश्रयणसाहाय्यसमर्पणमुखेन वाक्यस्य निर्विशेषप्रतिपादकत्वं चरमधियो विशेषपरित्यागेन प्रागनधिगतविषयकतया प्रमात्वं चेति चतुरस्रम् । निर्विशेषत्वादेव च परमपुरुषार्थस्य पदार्थान्तरेणान्वयानवकाशः । तत्प्रतिपादकत्वं च श्रुतिशिरसां संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थतेत्यभिदधत्याचार्याः । सम्यक्त्वं चात्रोक्तदिशा प्रागनधिगतनिर्विशेषप्रमात्वरूपम् । यदि पुनरन्वित एव पदानां शक्तिः स्यान्न स्यात्तदा प्रकृते कयापि विधया वेदान्तानां निर्विशेषावगमसाधनत्वं प्रमाणान्तरगम्यत्वं तु निर्विशेषस्य सुदूरपराहतमिति महदनिष्टमापद्येत । अतः प्राधान्येनात्र वृत्तिकारमतानुयायी प्रतिपन्न एव शिक्षणीयो यः क्रियाशेषत्वं ब्रह्मणो विब्रुवन्नाकुलीकरोति चेतांसि ब्रह्मनिष्ठानाम् । जैमिनिसूत्रे भाष्यकारो वार्त्तिककारश्च नात्र प्रतिकूल इति तयोरेवात्र प्रबन्धे प्राधान्येन प्रमाणभावावलम्बनम् । अत एवौत्पत्तिकसूत्रे जै॰ सू॰ अ १ पा॰ १ सू॰ ५ भाष्यकारो वेदान्तवाक्यानि आत्मज्योतिः सम्राडिति होवाच स एष नेति नेत्यात्मेति होवाचेति निर्विशेषप्रतिपादकान्येवात्मस्वरूपनिरूपणावसर उदाजहार । वार्त्तिककारश्च इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेनेत्युपसंजहार । स्फोटवादिनश्चरमवर्णं वाक्यघटकसकलवर्णसमुदाये च शाब्दधीहेतुत्ववादिनश्च निराकरणं तु ब्रह्मसूत्रे अ॰ १ पा॰ ३ सू॰ २८ देवादीनां शब्दप्रभवत्वप्रतिपादनावसरे पूर्वपक्षे स्फोटं निवेशितवता वर्णा एव तु पदमिति भगवानुपवर्ष इति वर्णानां शाब्दहेतुत्वमन्यमतत्वेन वदता ऽथापि नाम प्रत्यु-

प्रारणमन्येऽन्ये च वर्णाः स्युस्तथापि या वर्णेष्वर्थप्रतिपादनप्रक्रिया सा सामान्येषु संचारयितव्येत्यनास्थामाविष्कुर्वता भाष्यकारेण सूचितामरुचिं व्युत्पादयितुमिति तत्रैव भामत्यां दिङ्मात्रमिह दर्शितं विस्तरस्तु तत्त्वबिन्दाववगन्तव्य इत्यभिधानैदंपर्यपर्यालोचनया पर्यवस्यतीति विचारकुशला विदांकुर्वन्तु ।

तदेवमतिनिगूढाशयस्य प्रौढेः परां काष्ठामारूढस्यास्य प्रबन्धरत्नस्य मुद्रणे काशीराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षैर्नानाविधदर्शननिष्णातधिषणैः श्रीमदार्थरवेनिससाहिबमहोदयैरादिष्टोऽहं पाठशालापुस्तकालयस्थं देवाक्षरलिखितं पुस्तकद्वयं वङ्गाक्षरलिखितं च शुद्धतममेकं पुस्तकमिति त्रीणि पुस्तकानि समालम्ब्य प्रवृत्तः पर्यालोच्य बहुत्र क्लिष्टतां विषमस्थलानि संक्षिप्तया टिप्पण्या विशदयन् निवेशयँश्चाधः पाठभेदान् समापयं प्रस्तुतं कार्यम् । भृशमन्वगृह्ये च निखिलं सटिप्पणीकममुं मुद्रितादापत्रं निर्ध्याय महान्तं श्रममङ्गीकृतवद्भिः पाठशालायां प्रधानपण्डितैः श्रीकैलासचन्द्रशिरोमणिभट्टाचार्यमहाशयैः । अथापीदृशे दुर्घटे कार्ये मादृशाल्पज्ञजनसुलभेन मतिदोषेण जनितानि स्खलितानि सुविमृश्य प्रबोधयन्तु विचक्षणवरा येन कृतज्ञताप्रकाशनपुरःसरं यतेय द्वितीयसंस्करणे निर्दोषतासंपादनाय । सन्तारश्च गुणैकपक्षपातिनो दूषणवाचंयमाः सुधियः सीसकाक्षरयोजकदोषेण मदीयदृष्टिदोषेण चोपनता अशुद्धीरिति निश्चिन्वन् विरमामि निरर्थकाद्विस्तरादिति । शुभम् ।

फा० व० २ रवौ
सं० १९४८
१४ । २ । ९२

महामहोपाध्यायो मानवल्ल्युपाह्वो
गङ्गाधरशास्त्री ।

# तत्त्वबिन्दुः ।

अहये बुध्न्याय नमो ब्रध्नाय नमो नमोऽस्तु गणपतये ।
आर्यायै भारत्यै नमो नमश्चास्तु विष्टरश्रवसे * ॥ १ ॥

इह खलु पदकदम्बश्रवणसमनन्तरमविवादं विदितपदतदर्थसङ्गतीनामनधिगतार्थगोचरा धीरुदयमासादयति पुंसाम् । तस्या निमित्तं प्रति विवदन्ते वादिनः ।

केचिदाहुरनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकवर्णपदविभागमस्या निमित्तमिति † ।

पारमार्थिकपूर्वपूर्ववर्णपदपदार्थानुभवजनितसंस्कारसहितान्त्यवर्णविज्ञानमित्येके ‡ ।

---

* अहये बुध्न्याय शिवाय । अष्टमूर्तिरहिर्बुध्न्य इति कोशः । सामान्तरायमनुपादायैतस्यैवोपादानं तु अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रयीविदा विदुः । ऋचः सामानि यजूंषि । सा हि श्रीरमृता सताम् । तैत्तिरीयब्राह्मणे अ· १ प्र· २ खं २६ मन्त्र ३ इति मन्त्रानुसंधापनेन शिवस्य वेदत्रयगोप्तृत्वद्योतनायास्य मन्त्रस्य शाबरभाष्ये अ· २ पा· १ सू· ३५ उदाहृतत्वेन अकृत्यादिज्ञानोपयुक्तैकवाक्यत्वलक्षणं सू· ४६ बहुत्वात्पदार्थानामिति शाबरभाष्योक्तेर्गम्यते पदानां न शक्तिरिति व्यवस्थापयिष्यमाणसिद्धान्तस्य भाष्यकाराभिमतत्वस्फोरणाय चेति बोध्यम् । तथैवोपसंहरिष्यति । ब्रध्नः सूर्यः भास्कराहस्करब्रध्नेति कोशः । आर्यायै भारत्यै सरस्वत्यभिधायै गौर्यै । यन्याप्रभं सरस्वतीनमनस्यैवेत्यात्यक्षायतनं गौर्या एव शास्त्रोपदेशात्तथोक्तिः । सरस्वतीगौर्योरभेदश्च देवीमाहात्म्योत्तमचरिते स्पष्टः । आर्या दाक्षायणी चैवेति कोशः । विष्टरश्रवसे विष्णवे । वैकुण्ठो विष्टरश्रवा इति कोशः । अनेनादित्यमम्बिकां विष्णुं गणनाथं महेश्वरमिति स्मार्तैरवश्योपास्यदेवतापञ्चकनमस्काररूपं मङ्गलमनुष्ठितं भवति ।

† वैयाकरणाः । तथा च वाक्यपदीये काण्डे १ श्लो· ७३ पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चनेति । काण्डे २ श्लो· २३४ शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यत इति । उपपादयिष्यते चेदमग्रे । एवं मतान्तराण्यपि ।

‡ नैयायिकाः । वात्स्यायनभाष्ये अ· ३ आ· २ सू· ६२ वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावत् श्रवणं भवति। श्रुतं वर्णमेकमनेकं वा पदभावेन स प्रतिसंधत्ते, प्रतिसंधाय पदं व्यवस्यति पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते पदसमूहप्रतिसं-

प्रत्येकवर्णपदपदार्थानुभवभावितभावनानिचयजन्म*लब्धजन्मस्मृतिदर्पणारूढा वर्णमालेत्यन्ये† ।

पदान्येवाकाङ्क्षितयोग्यसन्निहितार्थान्तरान्वितस्वार्थाभिधायीनीत्यपरे‡ ।

पदैरेव समभिव्याहारवद्भिरभिहिताः स्वार्था आकाङ्क्षायोग्यतासंनिधिसध्रीचीना वाक्यार्थधीहेतव इत्याचार्याः§ । तत्र ।

प्रीयमानपरित्यागो बाधके नासति स्फुटे ।
दृष्टात्कार्योपपत्तौ च नादृष्टपरिकल्पना ॥

स खल्वयमेको वाक्यात्मा वाक्यार्थधीहेतुरनुभवाद्वा व्यवस्थाप्यते अर्थधीभेदाद्वा ऽन्यथा ऽनुपपद्यमानात् ।

अनुभवो ऽपि च वाक्यात्मानमेकमवयविनमनेकपदवर्णव्यासङ्गिनमङ्गप्रत्यङ्गवर्तिनमिव देवदत्तमनुभवेत् प्रत्यस्तमितवर्णपदविभागं वा ।

वर्णाः पदानि चास्यावयवाः सत्तामात्रेणानुभूयमानतया वा भवेयुः ।

न तावत्पूर्वकल्पः । अवयविन्यूनपरिमाणत्वादवयवानां परममहतां च वर्णानां तदनुपपत्तेः । गगनगुणत्वे वा ऽद्रव्यतया समवायिकारणत्वाभावेनावयवभावानवकल्पनात् ।

वायवीयावयवारब्धवर्णवादिना||मप्याशुतरविनाशशीलतया वर्णा-

---

धानाच्च वाक्यं व्यवस्यति संबद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यत इति । सिद्धान्तमुक्तावल्यां शब्दखण्डे च प्रत्येकपदानुभवजन्यसंस्कारैश्चरमतावद्विषयकस्मरणस्याव्यवधानेनोत्पत्तेः—तावत्पदसंस्कारसहितचरमवर्णज्ञानस्योद्बोधकत्वात् इति । एवं पदवाक्यरत्नाकरादिष्वपि ।

* जन्मेति पदमधिकमपि पुस्तकत्रये सत्त्वात्स्थापितम् ।

† उपवर्षप्रभृतयो मीमांसकाः । ब्रह्मसूत्रशाङ्करभाष्ये अ॰ १ पा॰ ३ सू॰ २८ वर्णा एव तु शब्द इति भगवानुपवर्षः इति । शाबरभाष्येपि अ॰ १ पा॰ १ सू॰ ५ अथ गौरित्यत्र कः शब्दः गकारौकारविसर्जनीया इति भगवानुपवर्ष इति । योगभाष्ये व्यासदेवोपि पा॰ ३ सू॰ १७ गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्तीति ।

‡ अन्विताभिधानवादिनः प्राभाकराः ।

§ भाट्टाः शबरस्वामिप्रभृतयश्च । तन्त्रवार्तिके अ॰ २ पा॰ १ सू॰ ४६ पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते इति । शाबरभाष्ये अ॰ १ पा॰ १ सू॰ २५ पदानि अवगता॰ सन्तो वाक्यार्थं गमयन्तीति ।

|| वाक्यपदीये काण्डे १ श्लो॰ १०६ लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।

नां परस्परमसहभुवामसंबद्धानामवयव्यारम्भासम्भवात् । न खल्वेते क्रम-भाविनोऽवयविनं वा तदसमवायिकारणं वा व्यतिषङ्गं* बिभ्रति । अबिभ्राणाश्च कथमवयवा व्यतिषक्ता वा । एकद्रव्यस्य च कार्यद्रव्यस्या-नुपपत्तेर्द्रव्यविनाशकारणद्वयाभावेन कृतकानित्यत्वप्रसङ्गात्† । असहभा-वित्वादेवानुभूयमानतयाऽप्यवयवभावः परास्तो वेदितव्यः । आशुतर-विनाशित्वेनानुभवानां तत्कर्मतयाऽपि तथात्वेन‡ सहभावाभावात् ।

स्यादेतदनवयवमेव वाक्यं वाक्यार्थस्य च वाचकम् । न च वर्णा एवानुभूयन्ते न तु तदतिरिच्यमानशरीरमपि वस्त्विति वाच्यम् । पद-मिति वाक्यमिति चानुसंहारबुद्ध्याऽभिन्नस्य वस्तुन उपारोहात्§ । न खल्वियं बुद्धिरभिन्नवस्तुनिर्भासा परस्परव्यतिरिच्यमानात्मनो वर्णानेव गोचरयितुमर्हति । एकत्वनानात्वयोरेकत्रासमवायात् । न च वर्णात्मन-स्तत्समवायिनो वाक्यस्य कुतस्तदुपरागवती प्रख्येति वाच्यम् । तदतिरि-च्यमानमूर्त्तीनां परमार्थसतां वर्णानामभावात् । तदेव|| हि सर्वजनीन-मानसप्रत्यक्षप्रवेदनीयप्रयत्नभेदभिन्ननानाध्वनिप्रत्येकव्यञ्जनीयं तत्त्वं¶ ध्वनयस्तु तुल्यस्थानकरणलब्धजन्मतया परस्परविसदृशतत्तद्वाक्यव्य-

---

स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते । तस्य कारणसामर्थ्याद्वेगप्रचयधर्मिणः । संनिपाताद्विभज्यन्ते सारवत्योऽपि मूर्त्तय इति ।

* व्यतिषङ्गोऽसमवायिकारणीभूतः संयोगः ।

† अवयवद्वयानारब्धस्य परमाणुगगनादेर्द्रव्यस्य कार्यताया अनङ्गीकारात् । द्रव्य-नाशस्यासमवायिकारणनाशजन्यत्वनियमाद् द्रव्योत्पत्तावसमवायिकारणसंयोगस्यापेक्षि-तत्वेन चाद्यहेतुनाऽलीकत्वरूपकृतकत्वस्य द्वितीयहेतुना नित्यत्वस्य चेति विरुद्धयोर्द्व-योरापत्तेरित्यर्थः ।

‡ अनुभवकर्मत्वेऽपि आशुतरविनाशित्वेनैककालिकत्वाभावेऽसमवायिकार-णसंयोगाश्रयत्वानुपपत्तेः ।

§ साहित्यावगाहिज्ञाने ।

|| वाक्यमेव ।

¶ मानसज्ञानविषयप्रयत्नभेदेन जनितैर्भिन्नैर्नानाध्वनिभिः प्रत्येकमभिव्यङ्ग्यं स्फोट-रूपं परमार्थसदित्यर्थः । तथा च वाक्यपदीये काण्डे १ श्लो॰ ७८ शब्दस्योर्ध्वमभिव्य-क्तेर्वृत्तिभेदे तु वैकृताः । ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते । श्लो॰ ८६ प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये । तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः इति ।

ञ्जकानेकविधध्वनिसादृश्येनान्योन्यविसदृशतत्तत्पदवाक्यसादृश्यापादयन्तः* सादृश्योपधानभेदा† देकमप्यनवयवमपि नानावर्णात्मेव सावयवमिव चाभासयन्ति मुखमिव मणिकृपाणदर्पणादयो नियतस्थानवर्णपरिमाणसंस्थानमनुपप्लवमेकमनेकमिवानेकस्थानवर्णपरिमाणसंस्थानभेदोपप्लव ‡ मिवादर्शयन्ति । न च प्रत्येकमभिव्यञ्जकत्वे ध्वनीनां प्रथमादेव ध्वनेर्वाक्यस्य प्रतीतेरुत्पत्तेस्तन्मात्रनिबन्धनत्वाच्चार्थप्रत्ययोत्पादस्य द्वितीयादीनामानर्थक्यं ध्वनीनामिति युक्तम् । व्यञ्जयन्तोऽपि हि प्रत्येकमिमे ध्वनयो न द्रागित्येव स्फुटतरं स्फोटात्मानमवभासयितुमीशते ऽपि त्वारूपमवभासयन्ति§ पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तराभिव्यक्तिक्रमेण त्वन्त्यो ध्वनिः स्फुटतरविनिर्विष्टस्फोटबिम्बज्ञानमाधत्त इति न वैयर्थ्यं द्वितीयादिध्वनीनाम् । नापि पूर्वेषां तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यस्य ध्वनेरसहायतया व्यक्तावभासवाक्यधीहेतुभावाभावात् । तद्यथा रत्नपरीक्षिणः पुनः पुना रत्नस्वरूपं वीक्षमाणस्य रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तं रत्नतत्त्वमवभासयन्ति किं तु पञ्चषदर्श-

---

* परस्परं विसदृशानामपि तेषां तेषां पदानां वाक्यानां वा व्यञ्जका येऽनेकविधा ध्वनयस्तेषां तुल्यस्थानकरणजत्वेन सादृश्यात्तदभिव्यञ्जनीयपदवाक्ययोरभेदेन भिन्नयोरपि सादृश्यप्रयोजका इत्यर्थः । अर्थभेदाच्छब्दभेदस्य नित्यस्फोटवादिनः शब्दार्थतादात्म्यवादिनश्चेष्टतया हर्यादिपदेषु श्वेतो धावतीत्यादिकेषु च द्व्यर्थकेषु पदेषु वाक्येषु चाभिव्यञ्जकध्वनिसादृश्यमूल एव तथा व्यवहार इति भावः ।

† हकाराद्यभिव्यङ्ग्यत्वेनैव सादृश्यस्य निरूपणीयतया हकारादिवैशिष्ट्यज्ञाने नानाध्वनिविषयकतया तद्गतनानात्वस्यापि प्रतिभासात् स्फोटस्य नानात्वसावयवत्वयोः प्रतिभास इति भावः ।

‡ अनेके स्थानं वर्णः परिमाणं संस्थानभेदः उपप्लवश्च यस्य तम् । मुखस्यैकत्वेऽपि दर्पणाद्याधारभेदाद् यथा सामीप्यदूरस्थत्वादिस्थानस्य मालिन्यादेर्वर्णस्याल्पत्वमहत्त्वपरिमाणस्य वक्रत्ववर्तुलत्वादेः संस्थानभेदस्यावयवसंनिवेशविशेषरूपस्य दर्पणादिनाशेन नाशस्य चारोपस्तथा स्फोटेपीति ।

§ ईषद्रूपमस्फुटमिति यावत् । तथा च शास्त्रदीपिकायाम् । न कश्चिदपि नादोऽस्य स्फुटाभिव्यक्तिं करोति किं तु सर्वे ते प्रत्येकं व्यञ्जकाः स तु न द्रागेव स्फुटमवभासते प्रथममस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवतीति । अ॰ ५ पा॰ १ सू॰ ५ पृ॰ ७१ ।

नजनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति एवतत्त्वम् । न च वर्णावभासा मिथ्याप्रत्ययास्तत्संस्कारा वा कथं व्यक्ततया परिच्छित्तिहेतव इति सांप्रतम् । आराद्वनस्पतो *हरितप्रवाहस्य * व्यक्ततरं वनस्पतितत्त्वप्रतीतिहेतुत्वदर्शनात् । वर्णाश्च समारोपितदीर्घत्वादिधर्मभाजः पारमार्थिकार्थधीभेदोपलम्भात् । तथा हि लौकिका नग इति गिरिमपदिशन्ति नाग इति हस्तिनम् । अजिनमिति चर्म अजीनमिति ज्यानिविहीनम् । शुन इति कर्मभूतान्सारमेयान् शून इति तु वृद्धिमापन्नम् । न चैते भ्रान्तयः व्यवहाराविसंवादात् ।

यस्तु स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारः† सर्वजनीनमपि पदमिति वाक्यमिति चैकविषयमनुभवमपजानीते स इत्थं शिक्षयितव्यः अस्ति वेत्सि तावच्छब्दादर्थधीरुदयत‡ इति सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति नो खल्विमां विधातुमुत्सहन्ते वर्णाः विकल्पासहत्वात् । ते हीमां प्रत्येकं वा विदधीरन् नागदन्ता इव शिक्यावलम्बनं मिलिता वा ग्रावाण इव पिठरधारणम् । न तावत्प्रत्येकमनुपलम्भविरोधात् । वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च । नापि मिलिताः तथाभावाभावात् । तथा हि । वास्तवो वा समूह एतेषामाश्रीयते अनुभवोपाधिको वा । तत्र सर्वेषामेव वर्णानां नित्यतया विभुतया च वास्तवी सङ्गतिरतिप्रसङ्गिनी केषांचिदेव पदवाक्यभावं नापादयितुमर्हति । अनुभूयमानानां त्वनुभवानुसारिणी तत्पर्यायेण पर्यायवती न समूहभाग्भवति । न खल्वेकदेशकालानवच्छिन्नाः समूहवन्तो भवन्ति भावाः अतिप्रसङ्गात् ।

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितो ऽन्त्यो वर्णः प्रत्यायको ऽर्थस्य§ तेन तथैव एकानुभवकल्पनेति चेद् न । विचारासहत्वात् । को नु स-

* दूरस्थवृक्षे हरिततृणसमूहज्ञानधाराया इत्यर्थः ।

† स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मार इति ३ पुस्तके पाठः ।

‡ उदीयत इति ३ पु० पा० ।

§ तथा च वाक्यपदीये काण्डे १ श्लो० ८५ नादैराहितबीजायामन्त्येन ध्वनिना सह । आवृत्तपरिपाकायां बुद्धौ शब्दो ऽवधार्यत इति ।

ऽञ्जकानेकविधध्वनिसादृश्येनान्योन्यविसदृशतत्तत्पदवाक्यसादृश्यापादय-
न्तः* सादृश्योपधानभेदा† देकमप्यनवयवमपि नानावर्णात्मेव सावयवमिव चाभासयन्ति मुखमिव मणिकृपाणदर्पणादयो नियतस्थानैकवर्णपरिमाणसंस्थानमनुपप्लवमेकमनेकमिवानेकस्थानवर्णपरिमाणसंस्थानभेदोपप्लव‡मिवादर्शयन्ति । न च प्रत्येकमभिव्यञ्जकत्वे ध्वनीनां प्रथमादेव ध्वनेर्वाक्यस्य प्रतीतेरुत्पत्तेस्तन्मात्रनिबन्धनत्वाच्चार्थप्रत्ययोत्पादस्य द्वितीयादीनामानर्थक्यं ध्वनीनामिति युक्तम् । व्यञ्जयन्तो ऽपि हि प्रत्येकमिमे ध्वनयो न द्रागित्येव स्फुटतरं स्फोटात्मानमवभासयितुमीशते ऽपि त्वारूपमवभासयन्ति§ पूर्वपूर्वाभिव्यक्तिजनितसंस्कारसचिवोत्तराभिव्यक्तिक्रमेण त्वन्त्यो ध्वनिः स्फुटतरविनिविष्टस्फोटबिम्बज्ञानमाधत्त इति न वैयर्थ्यं द्वितीयादिध्वनीनाम् । नापि पूर्वेषां तदभावे तदभिव्यक्तिजनितसंस्काराभावेनान्त्यस्य ध्वनेरसहायतया व्यक्तावभासवाक्यधीहेतुभावाभावात् । तद्यथा रत्नपरीक्षिणः पुनः पुना रत्नस्वरूपं वीक्षमाणस्य रत्नदर्शनानि प्रत्येकं रत्नस्वरूपमवगाहमानान्यपि न सहसैव समानासमानजातीयव्यावृत्तं रत्नतत्त्वमवभासयन्ति किं तु पञ्चषदर्श-

* परस्परं विसदृशानामपि तेषां तेषां पदानां वाक्यानां वा व्यञ्जका ये ऽनेकविधा ध्वनयस्तेषां तुल्यस्थानकरणजत्वेन सादृश्यात्तदभिव्यञ्जनीयपदवाक्ययोरभेदेन भिन्नयोरपि सादृश्यप्रयोजका इत्यर्थः । अर्थभेदाच्छब्दभेदस्य नित्यस्फोटवादिनः शब्दार्थतादात्म्यवादिनश्चेष्टतया हर्यादिपदेषु श्वेतो धावतीत्यादिकेषु च द्व्यर्थकेषु पदेषु वाक्येषु चाभिव्यञ्जकध्वनिसादृश्यमूल एव तथा व्यवहार इति भावः ।

† हकाराद्यभिव्यङ्ग्यत्वेनैव सादृश्यस्य निरूपणीयतया हकारादिवैशिष्ट्यज्ञाने नानाध्वनिविषयकतया तद्गतनानात्वस्यापि प्रतिभासात् स्फोटस्य नानात्वसावयवत्वयोः प्रतिभास इति भावः ।

‡ अनेके स्थानं वर्णः परिमाणं संस्थानभेदः उपप्लवश्च यस्य तम् । मुखस्यैकत्वे ऽपि दर्पणाद्याधारभेदाद् यथा सामीप्यदूरस्थत्वादिस्थानस्य मालिन्यादेर्वर्णस्याल्पत्वमहत्त्वपरिमाणस्य वक्रत्ववर्तुलत्वादेः संस्थानभेदस्यावयवसंनिवेशविशेषरूपस्य दर्पणादिनाशेन नाशस्य चारोपस्तथा स्फोटेपीति ।

§ ईषद्रूपमस्फुटमिति यावत् । तथा च शास्त्रदीपिकायाम् । न कश्चिदपि नादो ऽस्य स्फुटाभिव्यक्तिं करोति किं तु सर्वे ते प्रत्येकं व्यञ्जकाः स तु न द्रागेव स्फुटमवभासते, प्रथममस्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवतीति । अ. १ पा. १ सू. ५ प. ७१ ।

तज्जनितभावनासचिवचेतोलब्धजन्मनि चरमे चेतसि चकास्ति एकतत्त्वम् । न च वर्णावभासा मिथ्याप्रत्ययास्तत्संस्कारा वा कथं व्यक्ततया परिच्छित्तिहेतव इति सांप्रतम् । आराद्वनस्पतौ 'हरितप्रवाहस्य * व्यक्ततरं वनस्पतितत्त्वप्रतीतिहेतुत्वदर्शनात् । वर्णाश्च समारोपितदीर्घत्वादिधर्मभाजः पारमार्थिकार्थधीभेदोपलम्भात् । तथा हि लौकिका नग इति गिरिमपदिशन्ति नाग इति हस्तिनम् । अजिनमिति चर्म अज्ञीनमिति ज्यानिविहीनम् । शुन इति कर्मभूतान्सारमेयान् शून इति तु वृद्धिमाप्तवम् । न चैते भ्रान्तयः व्यवहाराविसंवादात् ।

यस्तु स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारः† सर्वजनीनमपि पदमिति वाक्यमिति चैकविषयमनुभवमपजानीते स इत्थं शिक्षयितव्यः वत्स वेत्सि तावच्छब्दादर्थधीरुदयत‡ इति सेयं वर्णातिरिक्तैकपदवाक्यानुभवमन्तरेण नोदेतुमर्हति नो खल्विमां विधातुमुत्सहन्ते वर्णाः विकल्पासहत्वात् । ते हीमां प्रत्येक वा विदधीरन् नागदन्ता इव शिक्यावलम्बनं मिलिता वा ग्रावाण इव पिठरधारणम् । न तावत्प्रत्येकमनुपलम्भविरोधात् । वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च । नापि मिलिताः तथाभावाभावात् । तथा हि । वास्तवो वा समूह एतेषामाश्रीयते अनुभवोपाधिको वा । तत्र सर्वेषामेव वर्णानां नित्यतया विभुतया च वास्तवी सङ्गतिरतिप्रसङ्गिनी केषांचिदेव पदवाक्यभावं नापादयितुमर्हति । अनुभूयमानानां त्वनुभवानुसारिणी तत्पर्यायेण पर्यायवर्ती न समूहभाग्भवति । न खल्वेकदेशकालानवच्छिन्नाः समूहवन्तो भवन्ति भावाः अतिप्रसङ्गात् ।

पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितो ऽन्त्यो वर्णः प्रत्यायको ऽर्थस्य§ तेन तथैव एकानुभवकल्पनेति चेद् न । विचारासहत्वात् । को नु ख-

दूरस्थवृक्षे हरिततृणसमूहज्ञानधाराया इत्यर्थः ।

† स्वसिद्धान्तामभ्यासाहितव्यामोहोपस्मार इति ३ पुस्तके पाठः ।

‡ उदीयत इति ३ पु० पा० ।

§ तथा च वाक्यपदीये काण्डे १ श्लो० ८५ नादैराहितबीजायामन्त्येन ध्वनिना सह । आवृत्तपरिपाकायां बुद्धौ शब्दो ऽवधार्यत इति ।

त्वयं संस्कारो*ऽभिमत आयुष्मतः किं स्मृतिबीजमन्यो वा प्रोक्षणादिभ्य इव व्रीह्यादेः । न तावदन्त्यः । न ह्यसावसहभुवां वर्णानां जन्य एकः संभवति उक्तादेव प्रकारात् । वर्णैर्यथास्वं क्रमविशेषशालिभिरन्ये ऽन्ये जन्यन्ते संस्काराः तेषां च स्थेम्ना संभवत्यन्त्यवर्णसाचिव्यमभिधेयप्रत्ययजननायेति चेद् अहो बतास्य स्वपक्षदृष्टिपक्षपातः† यद् बहुतरादृष्टसंभारकल्पनाक्लेशमपि न चेतयते संस्कार एव तावदनुपलब्धपूर्वस्तस्य च नानात्वमिति । आग्नेयादिवत्कल्पनागौरवं न कल्पकगर्हिततां‡मावहतीति चेद् न इहान्यथासिद्धेः । आग्नेयादयो हि विशरारवो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति चिरभाविने फलाय विहिताः समिदादयश्च प्रोक्षणादयश्च तदङ्गान्यसहभावीनि इति बहूपूर्वकल्पनां विना नोपपद्यन्तइति नासौ प्रमाणमार्गागतो दोषमावहति । इह पुनरेकगोचरानुभवमात्रादभिधेयप्रत्ययोत्पत्त्युपपत्तेरप्रामाणिकानेककल्पना न दोषमावहतीत्यचतुरस्रम् ।

वासनापरनामा संस्कारः स्मृतिबीजमन्त्यवर्णसहकारी तस्य च स्मरणफलप्रसवोचीतसद्भावस्यार्थधीजन्मनि सहकारितामात्रं कल्पनीयम् तत्र गौरवमिति चेद् न । स्वभावविपर्यासानुपपत्तेः अदृष्टान्तरकल्पनाप्रसङ्गाच्च । तथा हि । यो यद्गोचरानुभवयोनिः संस्कारः स तत्रैव धियमाधत्तइति तस्य स्वभावः यद्यन्यस्मिन्नप्यादधीत किं चिदेवैकमनुभूय सर्वः सर्वमर्थं विजानीयात्§। अपि च संस्कार इति च वासनेति च भावनेति च प्राचीनानुभवजनितमात्मनः सामर्थ्यभेदमेव स्मृतिज्ञानप्रसवहेतुमाचक्षते न चास्यैवा‖र्थप्रत्ययप्रसवशक्तिः शक्या कल्पयितुम् । सा खल्वभिधेयधीप्रसवोन्नीतसद्भावा फलवत्यात्मन्येव युक्ता कल्पयितुं न पुनरतद्रूत्यामस्य स्मृतिजननशक्तौ¶ । यथा चेयं मानान्तरसिद्धैवमसावपि । न चात्मनि शक्तिक-

* अर्थसंस्कार इति ३ पु० पाठः । † स्वदृष्टिपक्षपात इति ३ पु० पा० ।

‡ लोकगर्हिततामिति ३ पु० पा० ।

§ तथा च वर्णास्मरणमेव स्यान्न त्वर्थस्मरणमिति भावः ।

‖ संस्कारस्यैव शक्तिरूपत्वेन तत्र शक्त्यन्तरकल्पनानवकाशादिति भावः ।

¶ स्मृतिजननमिति २ पु० पा० । बोधकफलरहितायां शक्तौ संस्कारस्य स्मृतिजनकत्वमनुपयोगात्कल्पयितुं न युक्तमित्यर्थः ।

ल्पनायां सत्यां तस्याश्चाशक्तायाः कार्यकरणाभावाच्छक्त्यन्तरकल्पना न तु स्मृतिप्रसवशक्तावित्ति सांप्रतम् । न हि कल्प्यमाना शक्तिः शक्त्यन्तरयुक्ता कल्प्यते तन्मात्रादेव फलसम्भवे शक्त्यन्तरकल्पनायामनवस्थापातात् स्मृतिप्रसवशक्तावपि च साम्यात् । यथा वा ऽदृष्टान्तरं मा नाम * कल्पनीयमिति तद्वत्† गौरवमापन्नम् ।

स्मृतिसमारोहिणो वर्णा वाचकास्तत्र गौरवमिति चेन्न । क्रमाक्रमविपरीतक्रमाणां तत्राविशेषेणार्थधीसमुत्पादनप्रसङ्गात् । अथापि स्याद्यथास्वं वर्णानुभवैराहिताः संस्काराः संभूय निखिलवर्णविषयमेकमेव स्मरणं प्रसुवते तदुपारोहिणो वर्णा अव्यवधाना इत्यभिधेयधियमादधति । न चैकैकवर्णोपलब्धिप्रतिलब्धजन्मानः संस्काराः प्रतिवर्णगोचरास्तावतीरिव क्रमवतीः स्मृतीर्भावयितुमीशते तत्र तत्र निरपेक्षकारणभावोपलम्भात् ‡ न पुनरखिलवर्णगोचरं स्मरणमेकमिति रमणीयं तत्र तत्रानपेक्षाणां कारणत्वेपि मिलितानामप्यनेकगोचरैकविज्ञानजननदर्शनात् । तथा हि । यथा संस्कारश्चक्षुराद्यनपेक्षः स्मरणकारणं चक्षुरादयस्तन्निरपेक्षा आलोचनकारणम् । प्रत्यभिज्ञाने तु संस्कारसापेक्षाश्चक्षुरादयः । एवं तत्र तत्रोहनीयमिति न का चिददृष्टकल्पनेति तत्रास्ति§ । क्रमाभिव्यक्तिभ्यइव यौगपद्यविपरीतक्रमाभिव्यक्तिभ्यो ऽपि अभिधेयप्रत्ययप्रसङ्गात् । न खल्वेकोपलब्धिवर्तिनामस्ति कश्चिद्विशेषो वर्णानां न हि वास्तवः क्रमो नित्यानां विभूनां च तेषाम् । उपलब्धिनिमित्तस्त्वाश्रीयते सा चेदेका कुतस्तर्हि क्रम एतेषाम् । न च प्राचीनप्रत्येकवर्णानुभवनिचयमनुवर्तनीयं परापरताप्रतिभासत इति‖ सांप्रतम् । वर्णस्वरूपमात्रगोचरतया स्मृति-

* तथा चादृष्टान्तरं नार्न्नेति ३ पु॰ पा॰ ।

† शक्तिरूपे संस्कारे शक्त्यन्तरकल्पनारूपम् ।

‡ निरपेक्षाणां कारणत्वेऽपि भावोपलम्भादिति २ पु॰ पा॰ । संस्कारान्तरनिरपेक्षेण प्रत्येकं संस्काराणां कारणत्वेन स्मृतिरूपफलदर्शनादित्यर्थः ।

§ तत्रास्तीति २ पु॰ पा॰ । तथा च सकलवर्णविषयकमेकं स्मरणं संभवतीति भावः । एतावत्पर्यन्तमाक्षेप उत्तरस्तु परिहारः ।

‖ पदज्ञाने वर्णपौर्वापर्यप्रतिभासादनुभवगतक्रमविषयकत्वं स्मृतावङ्गीकार्यमिति भावः ।

रियं न तत्तदभिभवानपि गोचरयितुमर्हति तत्परापरतां तु प्रागेवेति युगपद्विपरीतक्रमाभिव्यक्तानां क्रमाभिव्यक्तेभ्यो विशेषाभावादेकोपलब्धौ सर्वथार्थप्रत्यायनप्रसङ्गः । तस्मात्स्वसिद्धान्ताभ्यासव्यामोहमपहायाभ्युपेयता * मनुसंहारबुद्धिरेकपदवाक्यगोचरा । न चास्या गोचरइव प्रत्येकध्वनि† व्यञ्जनीयस्तदर्थोपि प्रतिवर्णव्यञ्जनीय इति सांप्रतम् । प्रथमादेव वर्णादभिधेयधीसमुत्पादादानर्थक्यं द्वितीयादीनामित्युक्तम् । न चैतत्पदेपि तुल्यं तस्यैव हि‡ प्रत्यक्षस्य प्रतिध्वनिव्यञ्जनीयस्याभिव्यक्तितारतम्यं नानाध्वनिष्वायततइति नानर्थक्यमुत्तरेषाम् । न¶ चेयमप्रत्यक्षे ऽभिधेये विधा संभवति प्रत्यक्षगोचरो ह्यभिव्यक्तितारतम्यभाग§ न मानान्तरगोचरः‖ । स खलु गृह्यते वा न वा न पुनर्व्यक्तो ऽव्यक्तश्चेति ।

तदिदमसमञ्जसम् । तथा हि चक्षुषी निमील्य डिण्डिकमतरागं परित्यज्य निरूपयत्वत्रभवान्पूर्वबुद्धीरेकैकवर्णगोचरा उत्तरां च विशदपदवाक्यावगाहिनीं किमेता गादिबुद्धयो गकारादिमात्रनिर्भासा आहो स्विद्गकाराद्याकारं किंचिदेकमासु संप्लवते मुखमिव मणिकृपाण¶दर्पणादिषु भिन्नवर्णपरिमाणसंस्थानमेकमितरथा तत्र मुखमिति बुद्धिव्यपदेशावभिन्नवस्तुग्राहिणौ न स्याताम् । न संप्लवते चेद्गादय एव परस्परानात्मानः प्रकाशन्ते न पुनस्तदाकारं पदतत्त्वमेकं न जातु गजगवयहयरासभरुरवः परस्परव्यतिभिद्यमानमूर्तयो ऽवभासमाना रासभादिविवर्ता भवन्ति । संप्लवते चेद् अस्ति हि गकारादिषु भिन्नेषु अभिन्नवस्तुनिर्भासा शब्दःशब्द इति प्रख्या लौकिकपरीक्षकाणां तत्किं शब्दत्वमेव वाचकमभिधेयभेदानां तथा च तस्य सर्वत्राविशेषात्सर्वेर्था. सर्वशब्देभ्यः प्रतीयेरन् । न खलु

---

* अभ्युपेयतामिति ३ पु० पा० ।

† ध्वनिशब्दो नास्ति ३ पु० पा० ।

‡ तस्य हीति ३ पु० पा० ।

§ भाग् मानान्तरगोचरः न खल्विति ३ पु० पा० ।

‖ प्रत्यक्षगोचरो ह्यभिव्यक्तितारतम्यभाग् न मानान्तरगोचरः स खल्विति १ पु० पाठः श्लिष्टः । २ पु० भाग् मानान्तरगोचरः । न खल्विति पाठः ।

¶ मानकृपाणेति ३ पु० पा० ।

कारणानियमे कार्य्यनियमो भवितुमर्हति तस्याकस्मिकत्वप्रसङ्गात् । गकाराद्याकारविवर्तभेदं शब्दत्व*मभिधेयभेदाभिधायकं तत्रातिप्रसङ्ग इति चेद् न । प्राप्ताप्राप्तविवेकेन गादीनामेवाभिधेयधीहेतुत्वात् । अन्यथा सत्त्वगुणत्वादीनामपि तत्प्रसङ्गात् । अत्यल्पमिदम् अखिलमेव कार्यसामान्य†जातं सत्त्वसामान्यनिर्माणं प्रसज्येत । अपि च शब्दः चरमविज्ञानइव पूर्वेष्वपि विज्ञानेषु प्रथतइति नास्ति तिरोहितमिव किंचिदिति तेभ्योऽपि अर्थप्रत्ययप्रसङ्गः । एतेन वर्णत्वमपि परास्तमभिधेयधीहेतुभावेन वेदितव्यम् । तदिह कृतं कृतधियामप्रामाणिकेन शब्दत्वसामान्यनिराकरणप्रयासेन । न च शब्दत्वमेकं वस्तुसत्तद्भेदगकारादिनानात्वभाविकत्वविरोधि येन तद्वास्तविकत्वाय ‡ शब्दत्वमपाक्रियते । शाबलेयादिभेदव्यवस्थापनाय गोत्वादिनोऽपि सामान्यस्यापाकरणप्रसङ्गात् । शाबलेयादिभेदेषु गौर्गौरित्येकाकारावभासादशक्यापह्नवं तदिति चेद् न । इहापि समानत्वात् । न खल्वचि§ व्यञ्जनेषु च शब्दः शब्द इत्येकनिर्भासः प्रकाशो नास्ति लौकिकपरीक्षकाणाम् । न चैष श्रोत्रग्रहणोपाधिः विनाऽपि शब्दत्वमेकमिति सांप्रतम् । तद्ग्रहणानामपि नानात्वेनैकप्रत्ययाधानासामर्थ्यात् । श्रोत्रग्राह्यत्वोपाधेश्चा|| त्यन्तपरोक्षतया तद्गृहीतिविरहे शब्दः शब्द इत्येकनिर्भासप्रकाशानुपपत्तेः । अगृहीतस्योपाधेरुपहितप्रत्ययाधानासामर्थ्यात् । न च गकारादिषु अनुस्यूतमश्वादिपदव्यावृत्तमेकैकवर्णावगाहिनीषु प्रख्यासु तिरोहितमिव प्रथते । कथं न प्रथते यदा विशदपदावगाहिनि गौरित्येकं पदमिति चरमे चेतसि पूर्वोपलब्धभागप्रतिसंधानमस्ति । न चास्यैते भागा इत्यायुष्मतैवोपपादितम् । अतस्तद्विवर्ताः । तथा च तदेव तेन तेनापरमार्थसता गकाराद्याकारेण प्रतिभासतइति प्रमाणमीगांगतम् ।

---

* भेदगर्भमिति २ पु० पा० । गकाराद्याकारैरारोपितैर्भिद्यमानः शब्दो यत्र [illegible] पदं वाक्यं वेति तस्यार्थः ।

† सामान्येति ३ पु० नास्ति ।

‡ गत्वादेर्वस्तुत्वसिद्धये ।

§ अचित्विति ३ पु० पा० ।

|| श्रोत्रस्य चेति ३ पु० पा० ।

तत्किमिदानीमनुसंहारबुद्धिप्रतिसंधानापेक्षाः प्राञ्चः प्रत्यया यथास्वं गकारादिष्वनुविद्धमेकमवभासयन्ति । ओमिति चेत्, हन्त तत्र तत्र चरमविज्ञानसमये 'प्राचां प्रत्ययानामतिवृत्तत्वात्तत्काले* चरमस्य चेतसोऽनागतत्वात् उपकरोति असतामसन्निति चैवमापतितम् । अपि च जन्ममात्रव्यापारत्वेन विज्ञानस्य ज्ञातस्य† जन्माभावेन विरम्य व्यापारायोगात्तद्विपरीतं चाभ्युपेतं स्यात्‡ । अनपेक्षाश्च § प्राञ्चः प्रत्ययाः स्तम्भकुम्भाम्भोरुहावगाहिनइवाभिन्नानुव्याधविरहिणः स्वानुभवद्वारसमाना न परस्परं स्वगोचरं भिन्दन्ति ।|| नाप्यननुभविकः प्रत्ययेष्वेकानुव्याधः शक्यानुमानः नरविषाणवदनुपलब्धिविरोधात् । तथा च परस्परव्यावृत्तवर्णमात्रगोचरा अनुभूतयो भावनोपजननद्वारा नाना वैकं वा स्मृतिप्रत्ययं स्वगोचर एवादधते नान्यगोचरे नाप्यगोचरे इति । अनुसंहारबुद्धिरपि¶ परस्परव्यावृत्तवर्णरूपावगाहिनी न तु वर्णानुव्याधवदेकगोचरेत्यनुभवमार्गागतम् ।

कथं गौरित्येकं पदमित्येकपदावभासिनी धीरस्ति लौकिकपरीक्षकाणाम् । न चेयमनालम्बना नापि वर्णालम्बना तेषां नानात्वात् । नापि सेनावनादिवदौपाधिकी । उपाधिः खल्वेकविज्ञानविषयता वा भवेद् एकाभिधेयप्रत्ययहेतुता वा । न तावत्पूर्वः पक्षः । अप्रतीतोपाधेरुपहितप्रत्ययायोगात् । स्वसंवेदनं संवेदनमनिच्छतामनुसंहारबुद्ध्या स्वरूपाग्रह-

---

* आद्यवर्णज्ञानकाले । चरमनादाभिव्यञ्जनीयस्य स्फोटस्याद्यवर्णप्रत्यक्षकालेऽसत्त्वादसत उपकार्यत्वं चरमवर्णकाले चाद्यानां नाशादसत उपकारकत्वं चापद्यत इत्यर्थः ।

† ज्ञातस्येति ३ पु॰ पा॰ ।

‡ ज्ञानानामुत्पत्त्यैवार्थप्रकाशकत्वात्तृतीयक्षणे नाशाच्च प्रथमवर्णज्ञानस्यास्फुटपदत्वाभिव्यञ्जकत्वं चरमवर्णज्ञानसाचिव्येन तस्यैव स्फुटाभिव्यञ्जकत्वमिति न युक्तमिति भावः ।

§ अनपेक्षाः अनुसंहारबुद्धिप्रतिसंधाननिरपेक्षाः । समुदायबुद्ध्यसहकृता इति यावत् ।

|| न भिन्दन्ति न व्यावर्तयन्ति । तथा च गोगवयगीतादिप्रत्ययेष्वाद्यप्रत्ययैः स्फुटत्वेनेष्टा अपि परस्परव्यावृत्तरूपगवादिपदस्फोटाभिव्यक्तयोऽनुपपन्ना इति भावः ।

¶ समुदायात्मकपदस्वरूपज्ञानमपि ।

णा * तदेकत्वाग्रहात्तदुपाध्येकपदप्रतिभासानुपपत्तेः । उभयस्मिन्नपि पक्षे परस्पराश्रयप्रसक्तिर्दुर्वारा । न खल्वविदितपदरूपावधिरर्थमवैति । अवच्छेदकान्तरपरिग्रहे तत्त्वेऽपि वर्णानां तदर्थभेदानध्यवसायात् † । तत्रार्थप्रतिपत्त्या पदरूपविशेषमुपकल्पयतो दुरुत्तरमितरेतराश्रयं प्रसज्येत । न चैकार्थसम्बन्धाख्यानमेकपदत्वमापादयति । वर्णानामनाश्रितपदरूपाणामप्रत्यायकत्वेनासम्बद्धानां सम्बद्धाख्यानानुपपत्तेः ‡ । सम्बन्धाख्यानात्तु पदभावे तदेवेतरेतराश्रयत्वमापद्यते । पदत्वाद्धि सम्बन्धित्वे सत्याख्यानमाख्यानाच्च पदत्वे सति सम्बन्धितेति । अवस्थितं हि वाचकत्वमाख्यायते । अपि च एकावभासस्य प्रत्ययस्यौपाधिकत्वमिच्छतो न किं चिदेकं भवेत्सर्वस्यैव कथं चित्कस्य चिदुपाधेः सम्भवात् । तथा च नानात्वेऽपि न स्याद्वेकसमाहारात्मकत्वान्नानात्वस्य ।

अत्र ब्रूमहे । न वयमेकावभासप्रत्ययमेकवस्तुव्यवस्थितौ प्रमाणयामः किं तु व्यपदेशमात्रं भवति हि करितुरगादिष्वश्वत्थ § चम्पकाशोकखदिरधवकिंशुकादिषु नानात्वेऽपि कथं चिदेकमुपाधिमाश्रित्य सेना वनमिति व्यपदेशमात्रं लौकिकानाम् । न चैतावता सेना वनं वा करिचम्पकाद्यवयवसमवाय्येकमवयवि प्रसिध्यति । तथैव गकारादयोऽपि पूर्वापरीभावविपरिवर्तिनो रूपादनूनानधिका एकस्यां स्मृतौ प्रथमानाः सत्यपि पदमिति व्यपदेशभेदे नैकानुव्याधवन्तो भवितुमर्हन्ति उपाधिविरहात् । एकानुव्याधमुपकल्पयति व्यपदेश इति चेद् न इतरेतराश्रयापत्तेः । एकानुव्याधवती हि प्रख्या तादृशव्यपदेशोत्पादिनी बुद्धिनिबन्धनत्वात्‖व्यपदेशस्य । ततस्तु तामपेक्षमाणो व्यक्ताभि-

---

* ज्ञानेन स्वस्याविषयीकरणात्तस्यानुव्यवसायपाद्यत्वाद् ज्ञाततालिङ्गानुमेयत्वाद्वेति भावः ।

† पदत्वमनपेक्ष्य समुदायत्वादिधर्मान्तरपुरस्कारेण पदज्ञानेऽपि अर्थानां व्यावृत्तानामनुपस्थितेः । सामान्यतः पदत्वज्ञानेनार्थत्वेनार्थोपस्थितिः स्यादपीति भावः ।

‡ असंबन्धानां संबन्धाख्यानानुपपत्तेरिति २ पु: पा० ।

§ अश्वत्थेति २ पु० नास्ति ।

‖ बुद्धिनिमित्तत्वादिति ३ पु० पा० ।

तरेतराश्रयत्व* माविशति । न चात्रोपाधिविरहो ऽपि । अस्ति खल्वेकाभिधेयधीहेतुभाव† स्त्रयाणामपि वर्णानामेकस्मरणसमारोहिणां श्रावणामिवैकपिठरधारणे यस्मात्पदमिति व्यपदेशः प्रभवति । न चैवमन्योन्याश्रयं न हि पदावधारणाधीनः सम्बन्धबोधः किं तु तदधीनं पदविज्ञानम् । कारकभेदावधायि‡ हि पठपदं पठ्यते ऽनेनेति व्युत्पत्त्या । तच्छब्दाश्च कार्यसम्बन्धबोधोपहितसीमानो§ नासति तस्मिन्प्रवर्तितुमीशते । न च, स्वरूपभेदस्तावतां तादृशां वर्णानां वर्णान्तरेभ्यस्तेभ्य एव वा ऽतावद्भ्यस्तावद्भ्यो वा ऽतादृशेभ्यो|| न्यविज्ञानेऽप्यारोहिणामर्थप्रत्ययात् प्राग् न प्रथते येन सम्बन्धिभेदायत्तो सम्बन्धो न निरूप्येत । प्रकारान्तरवन्तस्तु तेभ्यस्तेषामेव चरमविज्ञाननिवेशिनां विशेषमय वेद्यामः ।

तथा सम्बन्धबोधनाख्यानमप्यमीषामीषत्करं समधिगतैकाभिधेयधीहेतुभावानां च तेषां पश्चात्पदमिति व्यपदेशो नानुपपन्नः । अपि चानंशस्य पदस्य वैशद्यावैशद्ये न युज्येते । सामान्यविशेषतत्त्वाभ्यामनुभूयमानता हि वैशद्यं सामान्यमात्रस्य तद्वन्मात्रस्य वा वेदनमवैशद्यं न च निखिलसामान्यविशेषविरहिणः स्फोटस्यास्फुटं दर्शनमुपपद्यते । स खलूपलभ्यते नोपलभ्यते¶ । न ह्यस्य दृश्यमानस्यास्ति किंचिददृश्यमानम् । न चास्ति सम्भवः स एव* तेनैव तदैव दृश्यते न चेति । अत एव न समारोपः सर्वथा ऽननुभूते तदयोगात् । कथं चिदनुभवे† निरंशत्वानुपपत्तेरपसिद्धान्तप्रसङ्गात् । तस्मादनवयवमेवानुभूयते पदतत्त्वमिति रिक्तं वचः । अत

---

* इतरेतराश्रयमिति ३ पु॰ पा॰ ।  † हेत्वभाव इति ३ पु॰ प॰ ।

‡ कारकभेदाभिधायीति ३ पु॰ पा॰ । कारकविशेषाभिधायकम् ।

§ कार्ये यः संबन्धबोधः तेन प्रापिता पदभेदरूपा सीमा अवधिर्येषां तादृशा इत्यर्थः ।

|| भिन्नानुपूर्वीकेभ्यः । अर्थज्ञाननैरपेक्ष्येणैव नदीदीनादिपदेषु स्वरूपभेदः प्रत्यक्षसिद्ध एवेति भावः ।

¶ न खलूपलभ्यते न चोपलभ्यत इति ३ पु॰ पा॰ । नोपलभ्यते वेति विकल्प्य वक्ष्यमाणं दूषणद्वयं योजनीयम् ।

* अत एवेति ३ पु॰ पा॰ ।

† एकदेशावच्छेदेन प्रत्यक्षत्वाङ्गीकारे ।

एव शब्दादर्थं* प्रतिपद्यामहइति । सपिशाचवटैतिह्यवदनुपलभ्यमानार्थवचनमनुभवाभावात् । अनुभव एव हि प्रमाणमार्गागतो लोकस्तत्त्वावलोकनात्† । न पुनः पुरुषप्रवादमात्रं मृषावादो ऽपि हि सम्भवति वटयक्षवत् । यदि त्ववश्योपपादनीयं ततो वरं शब्दशब्दोपलक्षितानां वर्णव्यक्तीनामेकस्मृतिसमारूढानामेकाभिधेयप्रत्ययोपजननलब्धसम्भावानामभिधकारकावस्थापादिताभेदानामेकत्वादेकवचनमुपपन्नार्थं‡ गोशब्दादिवि§ । न च धवखदिरपलाशा वृक्षा इति लोके न दृश्यते इति दृश्यमानमेतदपह्नवमर्हति|| दर्शनादर्शनयोर्लोकसिद्धत्वेन तुल्यबलतया बाध्यबाधकभावाभावेन¶ विषयव्यवस्थोपपत्तेः** । न चाप्रत्यक्षमपि अर्थधीकार्येण शक्यानुमानम् अन्योन्याश्रयात् । न खलु सत्तामात्रेण शब्दो ऽभिधेयधियमाधातुमर्हति । सत्तया ऽभिधायकत्वे तस्याः शाश्वतिकतया नित्यमाधानप्रसङ्गादिति । अतश्च स्वज्ञानं†† तद्धेतुरेषितव्यः । स्वज्ञानं चास्यार्थप्रत्ययलक्षणलिङ्गप्रसवमिति प्राप्तमन्योन्याश्रयम् । अपि च वर्णेभ्यो नाभिधेयप्रत्ययो नोपपद्यते । ते हि गौरिति स्मृतिबुद्धावेकस्यां विपरिवर्तमाना अभिधेय‡‡ प्रत्ययस्य गते§§ । न चास्यां|||| क्रमाक्रमविपरीतक्रमानुभूतानामविशेषो वर्णानाम् । तथा हि । प्राचीनानुभवभावितभावनानिचयलब्धजन्मा स्मृतिरनुभवानुसारिणी तद्गोचरानक्रमानपि तत्क्रमेण क्रमवदनुभवक्रमेणोप-

---

* शब्दार्थमिति ३ पु॰ पा॰ ।

† लोकैरविसंवादेन तत्र प्रामाण्याङ्गीकारात् ।

‡ उपपन्नमिति ३ पु॰ पा॰ ।

§ गोशब्दादित्येकवचनमुक्तक्रमेणैकत्वव्यवहारमात्रोपपत्तेरुपपन्नार्थकमित्यर्थः ।

|| धवादिषु वनत्वं प्रत्येकं न पर्याप्नोति वृक्षत्वं तु पर्याप्नोतीति विशेषाद् वनमित्येकवचनमेव वृक्षा इति बहुवचनमेव यथा तथा प्रकृते शब्दत्वस्य प्रत्येकपर्याप्ततया शब्दा इति बहुवचनमेव युक्तं न त्वेकवचनमित्याक्षेपाशयः ।

¶ अविषयव्यवस्थापपत्तेरिति ३ पु॰ पा॰ ।

** यथा तैलत्वस्य प्रतिबिन्दुपर्याप्तत्वे ऽपि कदा चित् प्रस्थमात्रे ऽपि तैलमित्येकत्वव्यवहारः कदा चित्तु तैलानि हेमन्ते सुखानीत्यादिव्यवहारश्च लोकसिद्धत्वेन न विरुद्धस्तथेहापीति भावः ।

†† स्वज्ञानेनेति ३ पु॰ पा॰ । ‡‡ एतन्मध्यस्थं २ पु॰ नास्ति ।

§§ २ पु॰ पाठे वर्णमात्रेणार्थोपस्थितौ न समर्था लोका इति शेषः ।

|||| अस्यां स्मृतौ ।

स्थानपर्यायमपि समाकलयन्ती अक्रमविपरीतक्रमानुभूतिभ्यो भिनत्ति । दृश्यते हि नदीदीनेतिस्मृतिधियोरभेदेऽपि वर्णरूपाणां विशदतरः पदभेदः । न चेदमनवयवपददर्शनमिति निवेदितम् । तदनुभवकर्मताक्रमः परमवशिष्यते* सोऽपि न्यूनातिरेकादिवदेकपदभेदावधारणोपायः । यथाऽऽहुरत्रभवन्तो वार्त्तिककाराः† ।

पदावधारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवर्ण‡श्रुतिस्मृतीरिति ॥

न च निरन्तरमतिसदृशस्वरबहुवक्तृप्रयुक्तेष्वानुपूर्व्यवत्सु समानस्मृतिबुद्धिसमारोहिष्वर्थप्रत्ययादर्शनाद्व्यभिचार इति सांप्रतम् । एकवक्तृप्रयुक्तत्वेन§ विशेषणात् । यथाऽऽहुः‖ ।

यावन्तो यादृशा ये च यदर्थप्रतिपादकाः ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधका इति ॥

¶न चैतत्कलकलश्रुतावशक्यज्ञानं किमिव हि दुष्करमभ्यासस्य यथाऽऽहुर्बाह्या अपि** ।

परेषामनुपाख्येयमभ्यासादेव जायते ।
मणिरूपादिषु ज्ञानं तद्विदामानुमानिकमिति ॥

न च संबन्धाख्यानसमयेवक्तृकताया अनाश्रया††दनङ्गत्वं हेत्वसिद्धेः । स्फुटतरतया तदनाख्यानं न खलु नैरन्तर्यादयोऽप्याख्यायन्ते तद्भावस्तु नैरन्तर्यादिष्विव वक्तृकत्वेऽपि समानः । न च ज्ञापकहेतुर्विदितसमस्तज्ञापकाङ्गो ज्ञापयतीत्यप्यैकान्तिकम् । भवति हि मनोऽनुमा-

---

* परिशिष्यतइति ३ पु० पा० ।

† श्लोकवार्तिके वाक्याधिकरणे अ० १ पा० १ श्लो १८० ।

‡ स्वरवाक्येति ३ पु० पा० । मुद्रिते श्लोकवार्तिकपुस्तके ऽप्येवमेव ।

§ एकवर्गप्रयुक्तत्वेनेति ३ पु० पा० ।

‖ श्लोकवार्तिके संबन्धाक्षेपवार्तिके अ० १ पा० १ सू० ५ श्लो० ६६ ।

¶ तथा च तेषां गुणभूतानामर्थप्रत्यायनं प्रति साहित्यमेकवक्त्रादिक्रमश्चापि विवक्षितइतीत्यधिकम् ३ पु० ।

** वाक्यपदीये काण्डे १ श्लो ३५ । मुद्रितपुस्तके परेषामसमाख्येयमिति मणिरूप्यादिविज्ञानमिति च पाठः ।

†† न्यूनाश्रयादिति ३ पु० पा० ।

नाङ्गम् । न चास्य वेदनमत्रोपपद्यते । तदिह दृश्यमाना एव वर्णेभ्यो दृश्यमानप्रकारभेदानुयायिभ्यो ऽभिधेयप्रत्यय उपपद्यमानो नैतानवज्ञाया* नवयवमत्यन्ताननुभूतं पदतत्त्वमुपकल्पयितुमर्हति । अतिप्रसङ्गात् । नापि समभिव्याहृतपदाभिहितपदार्थप्रत्ययाधीनोत्पत्तिर्वाक्यार्थधीरन्यथोपपद्यमाना ऽनुभूयमानपरस्परव्यावृत्तमूर्तीनि पदानि अपह्नुत्यात्यन्तापरिदृष्टं वाक्यमेकमनवयवमवगमयति । तत्सिद्धमेतदर्थापत्तेरनुमानस्य वा निवृत्तिस्तदेकगोचरपदवाक्यस्फोटावभासिनीति† नानवयवमेकं वाक्यार्थावबोधकमिति ।

नापि द्वितीयः कल्पः । तथा हि ।

नान्त्यवर्णश्रुतिः स्मृत्यानीता वाक्यार्थबोधिनी ।
न स्मृतिस्तदपेक्षा ऽयोगपद्यान्न च नवाः ॥

स खल्वन्त्यो वर्णः पूर्वपूर्ववर्णपदपदार्थविज्ञानजनितभावनानिचयसचिवश्रवणेन्द्रियसमधिगतजन्मस्मरणग्रहणरूपावाप्तवैचित्र्यसदसद्वर्णनिर्भासप्रत्ययविपरिवर्ती‡ वाक्यार्थधीहेतुरुपेयते स च चरमपदतदर्थसम्बन्धस्मृतिमाधाय वाक्यार्थधियमादधीतानाधाय वा । आधाय चेत्तद्धेतुभावेनोद्बोधसमये स्वजन्यसंस्कारकारणविनाशघातश्रुति§ रश्रूयमाणः संबन्धिस्मृतिसमये कथं तत्सहकारी|| वाक्यार्थप्रत्ययमादधीत । न च तदसहकारिणो वाक्यार्थधीहेतुभाव इति सांप्रतम् । अस्मरणे तदनुभववैयर्थ्येनागृहीतसङ्गतेरपि प्रथमश्राविणो भिन्ध्य प्रासेन भिन्दुरमिति वाक्यार्थप्रत्ययप्रसङ्गात् । न चान्त्यवर्णोद्बोधितसंस्काराधीनजन्मा स्मृतिरनुभवेन

* नैवानवज्ञायेति ३ पु॰ पा॰ ।

† स्फोटाभावमाधर्नाति २ पु॰ पा॰ ।

‡ पूर्वपूर्ववर्णप्रत्यक्षजन्यानां संस्काराणां समूहः सहकारी यस्य तादृशेन श्रोत्रेण जनितः पूर्ववर्णांशे स्मरणरूपतया चरमवर्णविषये चानुभवरूपतया प्राप्तरूपद्वयः सतां ऽन्त्यस्यासतां च पूर्ववर्णानां प्रकाशको यः प्रत्ययस्तद्विषय इत्यर्थः ।

§ संस्कारस्य स्मृतिनाश्यत्वात् स्मृतौ जातायां संस्कारनाशेन उत्तरज्ञानेन वेज्ञाननाशात् वर्णप्रत्यक्षनाशेन चेति भावः ।

|| तत्सहकारिणमिति २ पु॰ पाठः ।

सह युगपदुत्पत्तुमर्हति । न च न्याय्यो युगपदुत्पादः प्रत्ययानां करणस्य * प्रत्ययपर्याये सामर्थ्यात् । अन्यथा समानविषयबुद्धिधाराऽनुपपत्तेः † । सहसैव यावत्कर्तव्यकरणात्समर्थस्य क्षेपायोगात् । न च तावन्तं कालमस्ति प्रथमोत्पन्नध्वनिजनितसंस्कारभेदो यतः पुनरपि वर्णविषयं विज्ञानं जनयेत् । यथाऽऽहुः ।

क्षणिकं साधनं चास्य बुद्धिरप्यनुवर्तते ।
मेघान्धकारशर्वर्यां विद्युज्जनितदृष्टिवत् ॥

न चाननुभूयमानस्य सत्तामात्रेण बोधकत्वमित्यसकृदावेदितम् ॥ अस्तु तर्हि स्मृतिदर्पणारूढा वर्णमालैव वाक्यार्थधीहेतुः । वृद्धप्रयोगाधीनावधारणो हि शब्दार्थसंबन्धः । न च पदमात्रं व्यवहाराङ्गं प्रयुञ्जते वृद्धाः । किं तु वाक्यं तच्चानवयवं न्यषेधीति ‡ स्मृतिसमारूढा वर्णमालाऽवशिष्यते सा च नैमित्तिकं वाक्यार्थबोधमाधत्ते पारमार्थिकस्तु § पदतदर्थबोधो निमित्तमात्रेणावतिष्ठते वर्णमालैव वाक्यार्थधीहेतुरिति । तदप्यसांप्रतम् । कुतः ।

गौरवाद्विषयाभावात्तद्बुद्धेरेव भावतः ।
वाक्यार्थधियमाधत्ते स्मृतिस्था नाक्षरावली ॥

यदि हि वर्णमालैव स्मृतिसमारूढा वाक्यार्थमवबोधयेत्ततोऽर्भक गामानयार्भक गां बधान शिशो गामानय शिशो गां बधान बालक गामानय बालक गां बधान डिम्भ गामानय डिम्भ गां बधानेत्यष्टानां ‖ वाक्यानामष्टौ शक्तयः कल्पनीयास्तवेति कल्पनागौरवम् । पदवादिनस्तु सप्तैव सप्तानां

---

* मनसः । अत एव न्यायसूत्रं युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति । गोतमसू॰ अ॰ १ आ॰ १ सू॰ १६ ।

† प्रथमानुभवेन संस्कारोत्पादाद् द्वितीयादिज्ञानानां स्मृतित्वेन धारावाहिकप्रत्यक्षानुपपत्तेरित्यर्थः ।

‡ न्यषेधीदिति ३ पु॰ पा॰ ।

§ वाक्यघटकस्मर्यमाणसकलवर्णमालाया एवान्यथाऽनुपपत्त्या वाक्यार्थबोधहेतुत्वं पदज्ञानपदार्थोपस्थित्योस्तु तत्र सहकारितामात्रमित्यर्थः ।

‖ अन्तानामिति ५ पु॰ पा॰ ।

पदानां शक्तयः कल्पनीया इति लाघवम् * । एवं शुक्लामित्यादिपदप्रक्षेपे पदवादिनो ऽष्टानां पदानामष्टौ शक्तयः कल्पनीया इति लाघवं तत्र तु षोडशानां वाक्यानां षोडशापराः शक्तयः कल्प्या इति महद्गौरवमापन्नम् । अपि चेयमक्षरमाला पदार्थावगमपूर्वकं वाक्यार्थविज्ञानं जनयेदतत्पूर्वा वा । न तावदतत्पूर्वा † संसृज्यमानपदार्थविषयविज्ञानाधीनो हि संसर्गः संसृज्यमानपदार्थनिरूपणा ‡ मन्तरेण न शक्यनिरूपणः । तत्पूर्वे चेत्तथा हि § यथा यथा श्रूयन्ते पदानि तथा तथा पदार्था अपि प्रतीयन्ते । तदेताः पदतदर्थप्रतीतयो भावनानिचयद्वारेण स्वगोचरचारिणीमेकामेव स्मृतिधियमादधति तदारूढानि पदानि सपदार्थान्य ‖ दूरवर्तीनि वाक्यार्थबुद्धेरीशते इति तदप्यचतुरस्रम् । एवं च सत्यवश्याश्रयणीयेभ्यः पदार्थज्ञानेभ्य एव सिद्धेः कृतमनया वर्णमालया । तेषां च सामर्थ्यं निवेदयिष्यामः । अपि च । त्रिचतुरपञ्चषपदवाक्यवर्तिनी ¶ नानापदार्थप्रत्ययव्यवहिता क्रमेण वर्णमाला स्मर्यतापि तदभ्यधिकपदवति तु वाक्ये ऽसावतिदुःस्मरा । तस्मादिदमपि मत ** मविमृश्यमानसुन्दरमिति नाद्रियन्ते वृद्धाः ।

अस्तु तर्हि ।

पदान्याकाङ्क्षितासत्तियोग्यार्थान्तरसङ्गतान् ।
अर्थानभिदधन्तीह †† वाक्यं वाक्यार्थगोचरम् ‡‡ ॥

---

* लाघवमिति ३ पु॰ नास्ति ।

† अतत्पूर्वं वा । न तावदतत्पूर्वमिति ३ पु॰ पा॰ ।

‡ पदार्थावगममिति ३ पु॰ पा॰

§ यथा हीति २ पु॰ पा॰ ।

‖ अपदार्थानीति ३ पु॰ पा॰ ।

¶ वर्तिनीनां पदार्थेति २ पु॰ पा॰ । तदा पदव्यक्तीनामिति विशेष्यमध्याहार्यम् ।

** दर्शनमिति ३ पु॰ पा॰ ।

†† अभिदधन्ति पदानि वाक्यम् । वाक्यपदेन पठसमूह गुण व्यवह्रियतइति वत् ।

‡‡ वाक्यवाक्यार्थगोचरमिति २ पु॰ पा॰ ।

पदार्थमुख्यं हि प्रधानमेकं गुणभूतार्थान्तरेण व्यतिषक्तं वाक्यार्थमाचक्षते वृद्धाः । तं च पदान्येवाकाङ्क्षाद्युपधानलब्धसुकरव्युत्पत्तीनि प्रत्याययितुमीशतइति कृतमप्रामाणिकानुपपद्यमानानवयववाक्यादिकल्पनाभिः । ननु ।

पदान्तरस्य वैयर्थ्यमश्रुतान्वयबोधने* ।
श्रुतान्विताभिधाने तु व्यक्तमन्योन्यसंश्रयम् ॥

अथापि स्यादनभिहितेनैवार्थान्तरेणान्वितमर्थमभिदधीत पदमभिहितेन वा । तत्रानभिहितस्वार्थान्तरा†न्वितस्वार्थाभिधाने‡ पदादेकस्मादेवोच्चारितादविवक्षितार्थप्रतीतेर्वैयर्थ्यमितरेषाम् । अभिहितान्विताभिधाने तु यावत्पचेदित्यनेनान्वितस्वार्थो नाभिधानीयस्तावदुखायामित्यनेनाधिकरणमुखा नाभिधीयते । एवमुखायामित्यनेनापि यावत्स्वार्थो नाभिधानीयस्तावत्पचेदित्यनेन स्वार्थो नाभिधीयतइति परस्पराश्रयप्रसङ्गः । पदार्थस्वरूपाभिधानपूर्वके तु तद्वदन्वितार्थाभिधाने द्विरभिधानमप्रामाणिकमनुपपद्यमानमापद्येत । न च पदजातं प्रथममर्थजातमनभिदधदेव यथास्वं स्वाभिधेयानि साहचर्यमात्रा§दर्थरूपाणि स्मारयति अथैतान्यर्थान्तरान्वितान्यभिधत्तइति सांप्रतम् । यतः ।

पूर्वानुभवयोनित्वात्स्मृतिस्तदनुसारिणी ।
सा चान्वितस्वरूपेण ततोऽपेक्षानपेक्षणा|| ॥

न खलु पदं पदार्थमात्रे क्वचिदपि दृष्टचरं¶ येन तत्साहचर्येण तन्मात्रं स्मारयेत्तन्मात्रेण व्यवहारायोगात्तत्प्रयुक्तत्वाच्च तदुच्चारणस्य ।

---

* कल्पने इति ३ पु॰ पा॰ ।

† अनभिहितार्थान्तरेति ३ पु॰ पा॰ ।

‡ अनभिहितं स्वेनानुपस्थापितं यत् स्वार्थान्तरं स्वबोध्यत्वाभिमतमर्थान्तरं तदन्वितस्वार्थस्याभिधाने इत्यर्थः ।

§ साहचर्यादिति ३ पु॰ पा॰ ।

|| सा चान्वितेन रूपेण ततोऽपेक्षाऽनपेक्षणमिति ३ पु॰ पा॰ । अपेक्ष्यमाणस्य आकाङ्क्ष्यमाणस्यार्थान्तरस्यानपेक्षणा जिज्ञासाऽभाव इत्यर्थः । तथैवोपपादयिष्यति

¶ दृष्टचरप्रयोगमिति ३ पु॰ पा॰ ।

अपि त्वन्वितस्वार्थे तथा च गामानयेत्यत्रानयनान्वितस्वार्थो गोशब्द-स्तेन सहोच्चारितो गां पश्येत्यत्रापि तदन्वितामेव गां स्मारयेत् तन्मा भूत् तथा च तन्निराकाङ्क्षो गोशब्दः पश्येत्यनेन नान्वियात् । एवं प्रासादं पश्येत्यत्र प्रासादान्वितं पश्येति पदं तन्निराकाङ्क्षं न गवा सम्बध्येतेति सर्वत्र वाक्यार्थो * दत्तजलाञ्जलिः प्रसज्येत । न चाव्यभिचाराद्गामिति पदं स्वार्थमेव स्मारयति न तु पदार्थान्तरं व्यभिचारादिति सांप्रतम् । पदाभ्यासादरप्रत्ययाहिता भावना प्रबोधवती स्मृतिहेतुः सङ्गीयते । तस्याश्च प्रबोधः प्रणिधानादिजन्मा ऽव्यभिचार एव नायतते † साहचर्य-मात्रमस्याप्यस्तीति ‡ पदार्थान्तरसहितमेव स्वार्थमनाकाङ्क्षं स्मारयेदिति हता बत वाक्यार्थधीस्तपस्विनीति पदानामर्थरूपमात्राभिधानमेषित-व्यम् । तथा च ते ते पदार्थाः क्रियादयः स्वसामर्थ्येन स्वरूपमात्रेण पदैरभिहिता विना कारणादिभिरपर्यवस्यन्तस्तदाकाङ्क्षायोग्यतासन्निधि-सहकारिणो वाक्यार्थधियमादधतीति युक्तम् । अत्रोच्यते ।

विधान्तरानुपगमात्स्मृतिलक्षणयोगतः ।
अभ्यासातिशयाद्रूपस्मृतेर्नान्योन्यसंश्रयम् ॥

इदं तावन्निरूपयतु भवान् प्रमाणसंशयविपर्ययस्मृतिषु कतमेयं पदात्पदार्थप्रतिपत्तिरिति । तत्र न तावत्प्रमाणमनधिगतार्थबोधकं तदुपे-यते । यथा ऽऽहुः । सर्वस्यानुपलब्धे ऽर्थे प्रामाण्यं स्मृतिरन्यथेति § । न च पदात्पदार्थधीरनधिगतार्थगोचरा । न खलु सम्बन्धसंवेदनसमये सम-धिगतो ऽर्थः पदैरभिधीयमानो देशकालावस्थाविशेषेणाप्यतिरिच्यते । अन-तिरिच्यमानश्च न स्वरूपे विज्ञानं प्रमाणयति । अत एवाहुः ।

---

* वाक्यार्थप्रत्यय इति ३ पु॰ पा॰ ।

† अव्यभिचारे सत्येव स्मृतिजनक इति नियमो नास्तीत्यर्थः ।

‡ साहचर्यमात्रस्यापि च संबन्धतया प्रणिधानादिगणे पाठादुपपत्तेश्च तदु-द्बोधहेतुभावो न विरुध्यते । तत्र स्वार्थस्येव पदार्थान्तरस्याप्यस्तीति ३ पु॰ अधिकः पाठः ।

§ श्लोकवार्तिके वृत्तिकारग्रन्थे श्लो॰ ११ ।

परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ।
प्रमिते ऽनुप्रयुक्तत्वा*त्स्मृतेर्नास्ति प्रमाणता † ॥

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते इति च ‡ । न हि पदस्य प्रणिधानादिभ्यः संस्कारोद्बोधहेतुभ्यः कश्चिद्विशेषः । संशयविपर्ययहेतुभावस्तु पदस्येति स्थवीयः । न च पञ्चमी विधा समस्तीति स्मृतिः परिशिष्यते । सा चान्वितगोचरा न स्वरूपगोचरेति तुल्यो दोषः । अभिधानतः स्मारितं वाक्यार्थान्वयि न साहचर्यादिति चेत्कुतस्तर्हि गङ्गायां घोषः प्रतिवसतीत्यादौ तीरादीनामनभिधेयानां प्रतिवासान्वयः । अपि चाभिधानतः स्मारितस्वरूपमात्रस्य साहचर्यस्मारितेनैवार्थान्तरेणाकाङ्क्षोपरतेरनाकाङ्क्षितस्य च चरमप्रतीतेर्नाभिधानतो § ऽर्थान्तरेण संगमायोगात्समुत्पन्नसंकटो वाक्यार्थः प्रसज्येतेति कुतस्तद्भावना कुतस्तरां तदुद्बोधः पदैः कुतस्तमां च तदन्वयस्मरणमित्यकामेनापि अन्वयिस्मरण ‖ मभ्युपेयम् । इतश्चैतदेवं यदभ्यासातिशयः संस्कारातिशयमाधत्ते स च द्रागित्येव प्रबुद्ध एकपदे स्फुटतरं स्मरणमुपजनयति । दर्शनमात्रजन्मा ¶ पुनर्मन्दो विप्रलम्बितप्रबोधो मन्दमेव कार्यमाधातुमुत्सहते । अभ्यासवती च पदस्य स्वार्थेन साहचर्यानुभूतिर्यथा न तथा ऽर्थान्तरेण । अन्वये ऽभ्यासवत्यप्यर्थान्तरेष्वनभ्यासात्तद्रूपणा**च्चान्वयस्यानभ्यास एव । तथा च स्मृतिसन्निहितस्वरूपमात्रेणार्था अर्थान्तराकाङ्क्षाः पदैरन्विता अभिधीयन्तइति न परस्पराश्रयम् । नाप्यनाकाङ्क्षता । आकाङ्क्षा च प्रतिपत्तुर्जिज्ञासा । सा च क्वचिदभिधानापर्यवसानाद्भवति यथा दारा इति । न ह्यत्र प्रकृत्यर्थादतिरिक्ते प्रत्ययार्थे प्रतीतिरस्ति येनान्वितः प्रकृत्या

* तु प्रयुक्तत्वादिति ३ पु॰ पा॰ ।

† श्लोकवार्तिके शब्दवादे श्लो॰ १० २ ।

‡ श्लोकवार्तिकशब्दवादश्लो॰ १० ५ ।

§ पदान्तरसमभिव्याहारोत्तरमुद्बुद्धया ऽभिधया पश्चादुपस्थितेनेत्यर्थः ।

‖ अन्वितस्मरणमिति ३ पु॰ पा॰ ।

¶ तत्सहितार्थान्तरसाहचर्यदर्शनजन्य इत्यर्थः । स्वार्थेन संगतिग्रहो भूयान-र्थान्तरेण तु प्रयोगभेदेनानियतत्वाच्च तथेति भावः ।

** तद्रूपनिरूपणात्वादिति ३ पु॰ पा॰ ।

स्वार्थो ऽभिधीयेत प्रातिपदिकार्थमात्रे प्रथमोत्पत्तेः *। तदन्वितान्विताभिधानपर्यवसानाय प्रतिपत्ता पदार्थान्तरं स्मारितान्वययोग्यं जिज्ञासते। क्वचिच्चाभिहितार्थापर्यवसानाद् यथा विश्वजिता यजेतेति। इह हि कार्यस्य † विषयकरणान्वितस्याभिधानं पर्यवसितं न पर्यवस्यत्यभिहितं कार्यं नियोज्यभेदमन्तरेण। न खलु कार्यमनुष्ठानं विना व्यवतिष्ठते। न चाकर्तृकं तत्। न चानधिकृतः कर्ता। न चानियोज्यो ऽधिकृत इत्यानुपूर्व्या ‡ सिद्धं तेनात्रापि तत्पर्यवसानायास्ति तदन्वययोग्ये नियोज्ये जिज्ञासा। § न चानन्वितस्वार्थस्मरणमात्रावसितव्यापारेषु पदेषु तदर्था एवाकाङ्क्षादिसहकारिणः करिष्यन्ति वाक्यार्थधियमिति कृतमत्र पदानां सामर्थ्येनेति सांप्रतम्। पदानभिहितानां ‖ तेषां मानान्तरगोचराणां वाक्यार्थधीहेतुभावादर्शनात् ¶। श्वेतमधावन्तं पश्यतो हेषारवं च शृण्वतः खुरनिष्पेषशब्दं च श्वेतो ऽश्वो धावतीत्यन्वयधियः पदश्रवणमन्तरेणोत्पादो दृष्ट इति चेद् नानुमानादर्थापत्तेर्वा तदवगमात्। अनवगमाद्वा **। एवं वादी हि ताकत्प्रष्टव्यो †† व्याचष्टां किं स्वित्केतसमानाधिकरणो येन हेषाध्वनिखुरनिष्पेषशब्दावनुमितौ तस्य ज्ञाने निरूप्यते आहो स्वित्केन सितिमा च पदनिष्पेषशब्दो हेषाध्वनिश्च स्वरूपमात्रेणावमितः। तत्र पूर्वस्मिन् कल्पे लिङ्गसामर्थ्यजमेतन्न पदार्थसामर्थ्यजम्। उत्तरस्मिन्नपि द्रव्यान्तराभावनिश्चये सत्यर्थापत्तिस्तदभावे च नावगम एव। अपि च

* प्रत्ययोत्पत्तेरिति ३ पु० पा०।

† कार्यस्येति ३ पु० नास्ति।

‡ क्रियायाः सकर्तृकत्वनियमादिष्टसाधनताज्ञानं विना कर्तृत्वानुपपत्तेरनुष्ठानमन्तरेण फलासंभवात्स्वर्गकामः कर्तृत्वेनान्वेतीति भावः।

§ विश्वजिता यजेतेति वाक्ये ऽश्रुतमपि स्वर्गकाममन्वितमालोच्य सर्वत्र तथैवास्त्वित्याक्षिपति।

‖ पदानभिहितानामिति ३ पु० पा०।

¶ तथा च तत्र पदाध्याहार इति भावः। अन्यत्रापि क्व चित्स्वयिश पिनद्धामित्यादावध्याहारस्थले इष्टापत्तिः।

** व्याप्तिज्ञानाद्यभावे इति शेषः। वृत्तत्वे ऽपि तस्याः शाब्दत्वाभावाच्चेत्यपि वक्ष्यति।

†† पृष्ट इति ३ पु० पा०।

पदार्थसामर्थ्यस्याभ्युपगमे शब्दमूलत्वाभावेनाशाब्दत्वान्मनसश्च बाह्यानपेक्षस्याप्रवृत्तेः षट्प्रमाणीव्यतिरिच्यमानसहकारिसापेक्षत्वे सप्तमप्रमाणाभ्युपगमप्रसङ्गः * । तत्सिद्धमेतन्नानभिहिता अर्था वाक्यार्थधीहेतव इति पदैरभिहितानामयं महिमा ऽभ्युपेतव्यस्तेषाम् । तथा च पदार्थानां वाक्यार्थप्रत्ययाधानसामर्थ्यं पदानां च तत्सामर्थ्याधानसामर्थ्यमिति शक्तिद्वयं कल्पनीयम् । अन्विताभिधानवादिनस्तु प्रथमावगतानां पदानामभिधायकानां वाक्यार्थप्रत्ययोपजननपर्यवसिततात्पर्यवृत्तीनामेकमेवाकाङ्क्षायोग्यतासत्तिरूपोपाध्युपायगृहीतार्थान्तरान्वितस्वार्थाभिधानसामर्थ्यमिति लाघवादतो ऽर्थाभिधायिनां पदानामेव वाक्यार्थधीहेतुभाव इति चतुरस्रम् ।

अत्राभिधीयते । एष तावदौत्सर्गिको न्यायो यदसति बलवद्बाधकोपनिपाते ।

सहकारिणि कार्ये च प्रत्यासन्नं हि कारणम् ।
सति तद्भावभावित्वे तथा चार्थस्मृतिः पदात् ॥

भवति हि कुतश्चिन्मानसापराधाद्विदितपदार्थो विदितपदरूपमात्रश्चेतनो न मनागपि वाक्यार्थमवगच्छति अवगच्छति तु समभिव्याहृतपदकदम्बकोपजनितस्वार्थस्मृत्यनन्तरम् । तद् अमूषामेव स्वार्थस्मृतीनामाकाङ्क्षायोग्यतासत्तिसहकारिणीनां कारणत्वं वाक्यार्थप्रत्ययं प्रत्यध्यवस्यामः । यदपि मतं स्वार्थस्वरूपस्मृतयो ऽपि हि वस्तुतदर्थान्तर †-सङ्गतार्थगोचरा ‡ न स्वगोचरमर्थान्तरेण घटयन्ति विभ्रमप्रसङ्गात् । न खलु प्रासादमात्रस्य स्मरतो ऽस्मरतश्च तादृशपाटलिपुत्रं स्वरूपमात्रस्मृतयो माहिष्मत्यैनं घटयितुमीशते ईशाना वा भवन्त्यभ्रान्ताः । तद-

* अर्थसहकारिकारणकमनसो ऽर्थस्य वा केवलस्य प्रमितिजनकताया अक्लृप्तत्वादिति भावः ।

† वस्तुतस्तदर्थान्तरेति ३ पु॰ पा॰ ।

‡ वस्तुभूतेन ततो ऽर्थान्तरेण संगतो ऽर्थो गोचरो यासां तादृश्यः स्मृतय इत्यर्थः ।

प्यसांप्रतम् । मा नाम भूदीदृशं स्मरणफलसंस्कारस्य सामर्थ्यं, यदनुभूतानिनुभूतस्वरूपतदर्थान्तरसम्बद्धद्वयविषयमाधत्ते स्मरणं समीचीन *मिति। सम्भवति तु समभिव्याहृतपदावलीलब्धजन्मनामर्थस्वरूपस्मृतीनामाकाङ्क्षादिरूपसहकारिभेदोपधानाहितदशान्तरोपपादितप्रमाणभावाना †मनन्तरपरिदृश्यमानमानान्तरानधिगतस्वार्थपरस्परसम्बन्धनिर्भासप्रकाशफलानाम् । अन्यथा प्रत्यभिज्ञानमपि न जायेत । तत्रापि देशकालोपहित ‡-स्वरूपसंवेदनजन्मा संस्कारस्तदाहिता वा स्मृतिः कथं स्वार्थं देशान्तरेण वा कालान्तरेण वा घटयेत् । तत्र हीन्द्रियादिसहकारिसमवधानप्राप्तदशान्तरयोरेतयोः पूर्वापरदेशकालानुगतैकवस्तुगोचरप्रत्यभिज्ञानस्य प्रसवसहः§ को ऽपि महिमा तादृगभ्युपगन्तव्यः। स चेहापि समानो ऽन्यत्राभिनिवेशात् । न च देशकालावस्थानानात्वे वस्तुनो रूपं नानेत्युपपादितं न्यायकणिकायाम् । ननूक्तं न मानान्तरतो ऽनुभूतस्मृतानामर्थरूपाणां|| वाक्यार्थधीप्रसवसामर्थ्यमुपलब्धमुपलम्भे वा सप्तमप्रमाणाभ्युपगमप्रसङ्गः¶ । आगमस्य चात्रैवान्तर्भावे प्रत्यक्षादिभिस्तुल्यकक्ष्यतया तदेवोपन्यसनीयं न त्वागमस्तद्भेदः** । न हि लोका ब्राह्मणयुधिष्ठिरावेति प्रयुञ्जते प्रयुञ्जते तु ब्राह्मणराजन्यावेति वसिष्ठयुधिष्ठिरावेति वा । न च भेदान्तरोपन्यासेन भेदान्तरमुपन्यस्तं भवति । तदयं समस्तमानलक्षणप्रवृत्तो

* संस्कारस्य स्वगोचरागोचरविषयकस्मृतिजनकत्वाभावे ऽपि स्मृतेर्द्वयमात्रानुपपत्त्या तादृशप्रमितिजनकत्वमङ्गीक्रियतइति यावत् । सामर्थ्यं कर्तृ समीचीनमबाधितं स्मरणं कर्म । आधत्ते जनयतीत्यर्थः ।

† दशान्तरोपादितप्रमाणभावानामिति ३ पु॰ पा॰ ।

‡ देशकालभेदोपहितेति ३ पु॰ पा॰ ।

§ प्रत्यभिज्ञानप्रसवसह इति ३ पु॰ समस्तः पाठः ।

|| ननूक्तं च मानान्तरते ऽनुभूतस्मृतमर्थरूपाणामिति २ पु॰ पा॰ ।

¶ प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिव्यतिरिक्तस्यार्थस्वरूपस्यापि प्रमाणताऽऽपत्तिरित्यर्थः ।

** अर्थस्वरूपस्मारकत्वादागमस्यार्थस्यैव प्रमितिजनकत्वात् पूर्वोदाहृते भवतिपचायुषप्रत्यक्षचक्षुर्निष्ठ्यथावणप्रत्यक्षदशायामपि धीवर्ततीति धियोऽर्थमात्रप्रभवत्वस्वीकारे आगमस्य क्व चिदर्थस्मृतावुपयोगे ऽपि तस्याव्यापकत्वादिति भावः ।

मानतुषस्यादिपरित्यागे तेनैव सह स्वकौशलमपि परित्यजेदिति पदाहितानुभवानां वा* पदाहितस्मृतिरूपाणां वा ऽयमीदृशः† सामर्थ्यातिशयो यतो ऽन्वयधिय उदय इत्यकामेनाप्यभ्युपेयम् । तथा च तिस्रः शक्तयः कल्प्येरन्नु वा पदानां हि तावदर्थरूपानुभवजननशक्तिः अर्थरूपाणामन्योन्यान्वयप्रत्यायनशक्तिः तदाधानशक्तिश्चापरा पदानामेवेति । स्मारकत्वपक्षे तूक्तं शक्तिद्वयम् । अन्विताभिधाने तु पदानामेकैव शक्तिः तत्कल्पनालाघवादेतदेव न्याय्यमिति । अत्रोच्यते । सत्यम् ।

कल्पनालाघवं यत्र तं पक्षं रोचयामहे ।
तदेव कतरत्रेति निपुणं संप्रधार्यताम् ॥

एकैव किल शक्तिरन्विताभिधानवादिभिरन्वितस्वार्थगोचरा ऽभिप्रेयते पदानां न तु विशेषे‡ तदप्यभिधीयते§ । सेयं न तावदन्वयमात्रविषया । तन्मात्रविषयत्वे तस्याविशेषात्सर्वशब्दानां पर्यायताप्रसङ्गः । नापि व्यतिषक्ताभिधायि पदं न व्यतिषङ्गस्य वाचकं जात्यभिधायकमिव व्यक्तेः व्यतिषक्ततो ऽवगतेर्व्यतिषङ्गस्य व्यतिषक्तानां च स्वरूपतो भेदान्नैकार्थ्यं पदानामिति सांप्रतम् । व्यतिषक्त इति स्वरूपमात्रं वोपलक्ष्येत व्यतिषङ्गवद्वोच्येत । तत्र रूपाभिधानजन्मा ख्यातिः‖ जात्यभिधानजन्मेव व्यक्तिं न व्यतिषङ्गमपि गोचरयितुमर्हति । न हि यथा ऽऽकारिणमन्तरेणाकारो ऽशक्यनिरूपण इति शब्दसामर्थ्यगोचरत्वमनापन्नो ऽप्याकार्याकाराभिधायिशब्दजनितविज्ञानविषयभावं नातिपतति¶ तथा ऽर्थस्वरूपमन्वयमन्तरेण दुरधिगमं येन स्वगोचरशब्दसामर्थ्यजन्मनि

* बोद्धपदार्थानामेव शाब्दधीविषयतापत्ते ।

† पदाभिहितानुभवानामिति यददीदृश इति ख २ पु॰ पा॰ ।

‡ अन्विते न तु विशिष्टइति ३ पु॰ पा॰ ।

§ स्ववाच्यप्रतियोगिताऽनुयोगिताकत्वविशिष्टे तत्त्वेन तात्पर्यविषये वा न तु सम्बन्धत्वव्याप्यतत्तद्रूपावच्छिन्ने नानार्थत्वप्रसङ्गात् ।

‖ स्वरूपमात्रनिरूपितशक्तिज्ञानमित्यर्थः ।

¶ शुक्लादिशब्दगतशक्त्यविषयो ऽप्याकारी गुणाश्रयो गुणमात्रवाचकपदजन्य बोधविषयतां न मुञ्चतीत्यर्थः । आकारीति पृथक् पदम् ।

विज्ञाने ऽन्वयमपि समर्पयेत् । तद्रूपस्यान्वयमन्तरेणापि शक्यनिरूपणत्वात् । नान्वयं विना तद्रूपं क्वचिदपीति चेत् । तत्किं लिङ्गमपि न लिङ्गिनं विनेति तदपि तन्निरूपणाधीननिरूपणमस्तु तथा न लिङ्गत्वमपीति अनुमानमुत्पन्नसङ्कटमापद्येत* । तस्मादन्वितं शब्दसामर्थ्यगोचर इत्यभ्युपगच्छता ऽर्थस्वरूपं च तदन्वयश्च तद्विषयतया ऽभ्युपगते भवतः । तदिह यदि पदसामर्थ्यस्य स्वरूपमात्रगोचरतया ऽन्वयधिय उदयमुपपादयितुं शक्ष्यामः ततस्तावतैव परितोक्ष्यामः । तदन्वयविषयत्वकल्पनाच्च विरंस्यामो लाघवाय । अथ तु सहस्रेणाप्यनुसरणप्रकारेण प्रयत्नानामर्थस्वरूपमात्रोपक्षीणशक्तिनि पदसामर्थ्ये वाक्यार्थबुद्ध्युदयासंभवः ततः, परावृत्य शब्दसामर्थ्यस्यैवोभयविषयत्वं कल्पयिष्यामः । किं तावत्प्राप्तम् ।

वाच्यरूपाविनाभूतव्यतिषक्तदशापराः ।
समभिव्याहृतेः शब्दा भवन्त्यनुपपत्तितः ॥

सामर्थ्याधिगमो हि भावानां न मानान्तराधीनजन्मा किं तु कार्योत्पत्त्यन्यथाऽनुपपत्त्यायतते । तद्व्यमपि व्यतिषङ्गप्रतीतिः कथमपि दृष्टादृष्टप्रकारभेदसहायादुपपद्यमानोत्पत्तिर्न पदसामर्थ्यमात्मनि प्रमाणयितुमर्हति । अनन्यलभ्यः शब्दार्थ इति हि त्रैविद्यवृद्धाः । अत एवाख्यातादौ कर्त्राद्यभिधायितां नाद्रियन्ते । लभ्यते च समभिव्याहारान्यथानुपपत्त्या पदानामन्वितार्थपराणां स्वाभिधेयार्थरूपसमवेतान्वितावस्थाप्रत्यायनं लक्षणया । न हि पदान्यसमभिव्याहृतानि स्वाभिधेयप्रत्ययमात्रेण पर्यवसातुमीशते । न हि लौकिकाः पदार्थमात्रप्रत्यायनाय प्रवर्तन्ते । प्रतिपित्सितं खल्वेतदिति प्रतिपादयिष्यन्तः पदान्युच्चारयन्ति । अबुभुत्सितावबोधने त्वनवधेयवचनतया नामी लौकिका नापि परीक्षका इत्युन्मत्तवदुपेक्ष्येरन् । न च भूयो भूयः समधिगतं परं पदार्थमात्रं बुभुत्सन्ते । तदनधिगतमर्थमवगमयितुमनसः समभिव्याहरन्ति वृद्धाः पदा-

* लिङ्गस्य लिङ्गत्वस्य वा व्यापकाधीननिरूपणत्वेन तज्ज्ञानकालएव व्यापकज्ञानाभ्युपगमे पक्षधर्मताज्ञानोत्तरजायमानप्रमितिविषयताऽनुपपत्तेरिति भावः ।

नि । तदयं समभिव्याहारः पदानामनधिगतार्थप्रत्यायनप्रयुक्तस्तदन्तरे-णानुपपद्यमानः स्वाभिधेयसमवेतामनधिगतचरीमन्वितावस्थां लक्षयति । तदुक्तम् । विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनइति । तदेवमनुपपद्यमा-नसमभिव्याहारपदजातजातस्मरणस्वार्थप्रत्यासत्त्या*दृश्यमानया दृश्यमा-नार्थगताकाङ्क्षायोग्यतासन्निधिसध्रीचीनया लक्ष्यमाणा ऽन्वितावस्था ना-त्मनि पदसामर्थ्यं प्रमाणयति अन्यलभ्यत्वात्† ।

स्यादेतत् । अस्तु लौकिकानां पदसंघातानां प्रेक्षावत्पुरुषसं-दृब्धानां संदर्भितुरभिप्रायमनुरुध्यमानानामनुपपत्त्या ऽनधिगतार्थलक्षणप-रत्वं वैदिकानां तु पुरुषासंदृब्धानामबुद्धिपूर्वाणां नानुपपत्तिर्यया‡ऽन्वि-तावस्थां लक्षयेयुः । यएव लौकिकाः शब्दास्तएव वैदिका अपीति चेत्तत्किं गङ्गायां घोष इति गङ्गाशब्दो लाक्षणिक इति गङ्गायां पयांसि यादांसि गङ्गायामित्यत्रापि स एव लाक्षणिको ऽस्तु । अनुपपत्ति-विरहान्नैवमिति चेत्समानमेतदबुद्धिपूर्वकेषु वैदिकेष्वपि । §अथ परस्यापि वैदिकेषु पदसंदर्भेषु कुतो ऽनधिगतार्थबोधनम् । अर्थान्तरान्वितस्वार्थे पदसामर्थ्यावगमाल्लोके वैदिकानां च लौकिकेभ्यो ऽनन्यत्वादिति चेत्तन्न । लौकिकपदानि हि पुरुषाधीनरचनया तदभिप्रायानुरोधेनान्वि-तार्थपरतया तमवगमयितुमीशते इति किमर्थान्तरान्वितस्वार्थाभिधान-कल्पनया|| । तथा सति वैदिकार्थप्रतीतिरनुपपन्नेति चेद् मोपपादि किं नश्छिन्नं नैयायिकानाम् । मानानुसारि हि प्रयोजनं न तु तदनुसारि मानम् । तस्मात्स्वदृष्टिपक्षपातं परित्यज्यास्थायास्तिकपथमृजुमनुसरावो निमित्तमप्रत्यूहमस्या वैदिकार्थप्रतीतेः । तत्रानादिवृद्धव्यवहारपरंपराय-

* अनुपपद्यमानः संसृष्टतात्पर्यकत्वाभावे ऽनुपपन्नः पदान्तरसमभिव्याहारो यस्य तादृशेन पदजातेन पदसमूहेन जातं स्मरणं यस्य तादृशस्यार्थस्य प्रत्यासत्त्या संब-न्धेनेत्यर्थः ।

† अनन्यलभ्यत्वादिति २ पु॰ पाठः ।

‡ तात्पर्यानुपपत्त्येत्यर्थः ।

§ अन्विताभिधानवादं दूषयति । अथेति । लोके ऽर्थान्तरान्वितस्वार्थे पदानां सामर्थ्यग्रहादगृहीतसङ्गतिकस्य स्वर्गापूर्वादेर्वैदिकबोधविषयत्वासंभवादिति भावः ।

|| पदैरर्थस्वरूपमात्रोपस्थितौ वक्तृतात्पर्यज्ञानवशात्तत्संसर्गबोध इति भावः ।

पदतदर्थसंबन्धबोधोपाये सत्यसत्यपि संबन्धरि शब्दादर्थप्रतीतेरुपपत्तेर-
र्थभेदनिरूपणस्य च ज्ञानभेदनिबन्धनत्वाज्ज्ञानभेदस्यार्थाभेदात्तदनभि-
धाने ऽभिधानाभावादर्थभेदाभिधाने वा तत एव सिद्धेस्तदभिधानानुप-
पत्तेस्तद्धेतुतया तु तत्कल्पने ताल्वादिव्यापारस्यापि वाच्यत्वप्रसङ्गात्स्वा-
भाविकः शब्दार्थयोः संबन्ध इति स्थितिः*। स† तु किमर्थान्तरान्वितस्या-
र्थस्यार्थरूपमात्रस्य वा। यदापि रूपमात्रमुच्यते पदैस्तदा ऽपि किं‡ तन्मा-
त्रपरैराहो स्विदन्वितावस्थाप्रत्यायनपरैः। तत्र रूपमात्रप्रत्यायनपरत्वे
पदानां वाक्यार्थप्रत्ययानुपपत्तेरप्रयोजनस्य प्रयोजनासंभवा§दत्यन्तान्धमूकं
जगत्प्रसज्येत। तदुभयं|| परिशिष्यते लौकिकपदसंदर्भस्य विशिष्टार्थप्रत्या-
यनप्रयोजनपरस्य। तत्रार्थान्तरान्वयपरस्य स्वार्थमात्राभिधाने ऽप्यन्वित-
प्रतिपत्तेरुपपत्तेरर्थापत्तिपरीतया ऽत्रान्वयं यावत्पदस्य सामर्थ्यमनुवर्तनी-
यम्¶। तथा हि। वृद्धप्रयुक्तवाक्यश्रवणसमनन्तरं प्रवृत्तिनिवृत्तिहर्षशोकभय-

---

* वृद्धव्यवहारपरंपरारूपे शब्दार्थसंबन्धज्ञानकारणे सति अनेन शब्देनायं बोध्य
इत्युपदेष्टर्यसत्यपि बोधदर्शनात्तत्तदर्थगतभेदप्रतिपादनस्य तत्तद्विषयकज्ञानाकारभेदप्रयु-
क्तत्वाज् ज्ञानगतवैलक्षण्यस्य विषयतासम्बन्धेन तत्तदर्थरूपतया ऽर्थाभेदाद् ज्ञानगतवैलक्ष-
ण्यस्य वस्तुतः सत्त्वे ऽपि तस्य बोधविषयत्वाभावेन पदेषु तत्तज्ज्ञानगतवैलक्षण्यनिरूपि-
तशक्तेर्वक्तुमशक्यतया ऽर्थानामिव तत्तदर्थगतवैलक्षण्यस्यापि वाच्यत्वाङ्गीकारे तावन्मा-
त्रेण शक्त्यैवेतरव्यावृत्ततत्तदर्थविषयकशाब्दधिय उपपादयितुं शक्यतया ऽन्वयांशे पदवा-
च्यताभ्युपगमवैयर्थ्यादर्थगतवैलक्षण्यबोधस्य स्वान्वयप्रयोज्यत्वमात्रेण स्वरूपतो ऽर्थाभेदा-
त्तद्वैलक्षण्यनिर्वाहकान्वयांशस्यापि वाच्यत्वाभ्युपगमे भिन्नाभिन्नार्थबोधकारणीभूतपद-
प्रत्यक्षकारणपदोच्चारणानुकूलप्रयत्नताल्वादिव्यापारस्यापि परंपरयेतरव्यावृत्तार्थबोध-
नोपयोगित्वेनानिष्टस्य वाच्यत्वस्यापत्तेः शब्दार्थसंबन्धः स्वाभाविक एवेति सिद्धान्त
इत्यर्थः।

† सम्बन्धः।

‡ किमिति २ पु· नास्ति।

§ स्वरूपमात्रतात्पर्यकैः पदैस्तात्पर्यविषयस्य संसर्गस्य बोधनीयत्वासंभवादि-
त्यर्थः।

|| उभयम्। अर्थान्तरान्वितस्वार्थाभिधायकत्वमन्वितावस्थाप्रत्यायनतात्पर्य-
कत्वं च।

¶ स्वार्थमात्रनिरूपितशक्तिस्वीकारे ऽपि पदसमूहस्य विशिष्टार्थबोधतात्पर्यक-
त्वे ऽन्वयप्रतीतेः पदविशेष्यकतात्पर्यज्ञानेनैवोपपत्तेः यजेत स्वर्गकाम इत्यादावपूर्वे ऽर्था-
पत्तिलभ्ये पदानामशक्यार्थान्तर इवान्वयांशे ऽपि सामर्थ्यमङ्गीकार्यमित्यर्थः

संप्रतिपत्तेर्व्युत्पन्नस्य व्युत्पित्सुस्तद्धेतुप्रत्ययमनुमिमीते तस्य सत्त्वमप्यन्वयव्यतिरेकाभ्यामनुपजातस्य पदजातश्रवणसमनन्तरं संभवतस्तद्धेतुभाव*मवधारयति। न चैष प्रत्ययः पदार्थमात्रगोचरः प्रवृत्त्यादिभ्यः कल्प्यत†इति विशिष्टार्थगोचरो ऽभ्युपेयते तद्विशिष्टार्थपरता ऽवसिता वृद्धव्यवहारे पदानाम् । न चेयमविशिष्टार्थस्मरणमन्तरेणेत्यविशिष्टार्थस्मारकत्वं‡ तदुत्पत्त्यैव प्रत्युक्तम्§। न चैतदेषां विशिष्टार्थतामुपहन्तुमर्हति । न जातु भावाः स्वनिमित्तमुपघ्नन्ति सोपघानिषत स्वमपीति । न चैतावता विशिष्टाभिधानमविशिष्टविषयेभ्यो ऽपि तत्परेभ्यस्तदुपपद्यते|| । तस्माल्लोकानुसारेण वैदिकस्यापि पदसंदर्भस्य विशिष्टार्थप्रत्ययप्रयुक्तस्याविशिष्टार्थाभिधानमात्रेण लक्षणया¶ विशिष्टार्थगमकत्वम् । स्वार्थमात्रपरत्वे तु प्रयोजनाभावेन तस्याप्यनुपपत्तेः** । यथाहुरत्रभवन्तो वार्तिककारमिश्राः†† ।

---

* संस्कारणकत्वं वाक्यकारणकत्वमिति यावत् ।

† प्रवृत्त्यादीनां पदार्थमात्रप्रतीत्या ऽनुपपत्तेः प्रवृत्त्यादय एव विशिष्टार्थप्रतीत्यनुमापका इति भावः ।

‡ विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मप्रकारकनिश्चयस्य च हेतुत्वात् ।

§ विशिष्टविषयकबोधोत्पत्त्यैव पदानामविशिष्टार्थस्मारकत्वमाक्षिप्तमित्यर्थः ।

|| असंसृष्टस्वार्थमात्रनिरूपिताभिधाख्यवृत्तिविशिष्टेभ्यः पदेभ्यो विशिष्टार्थतात्पर्यकेभ्यस्तात्पर्येणैव संसृष्टार्थप्रतीत्युपपत्तेः संसृष्टनिरूपिता ऽभिधा न स्वीक्रियत इत्यर्थः ।

¶ लोके वक्त्रभिप्रायरूपतात्पर्यसंभवे ऽप्यपौरुषेयेषु वैदिकवाक्येषु तदसंभवाल्लक्षणया पदार्थमात्रोपस्थितावपि लक्षणया संसृष्टार्थबोधजनकत्वमित्यर्थः ।

** तदन्यप्रतीतीच्छया ऽनुच्चरितत्वे सति तत्प्रतीतिजननयोग्यत्वरूपेण तात्पर्येण युक्तस्य वैदिकपदजातस्य स्वार्थमात्रे प्रदर्शिततात्पर्यस्वीकारे प्रयोजनभूतस्य प्रवृत्त्यादेः स्वरूपमात्रज्ञानेनासम्भवात् प्राक् प्रदर्शितरीत्या ऽनुमितिकारणीभूतप्रवृत्त्याद्यभावेन स्वार्थमात्रबोधस्याप्यनुपपत्तेरिति भावः । एवं च स्वरूपमात्राभिधानेन प्रयोजनशून्येषु वैदिकपदेषु लक्षणाऽऽश्रयणेन संसृष्टबोधाङ्गीकारे ऽपि निर्विशेषात्मतत्त्वबोधनेन निखिलप्रपञ्चबाधरूपपरमप्रयोजनसंपादकेषु महावाक्येषु तत्त्वमस्यादिषु नान्वयांशे लक्षणेति भावः । अत्र भूमिका ऽनुसंधेया ।

†† श्लोकवार्तिके वाक्याधिकरणे श्लो॰ ३३९ ।

साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले ॥
वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्* ।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥

तथा च वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिरिति । †अन्विते ऽर्थे तात्पर्याभ्युपगमात्तदभिधायित्वं पदानामिति चेत्तत्किं गङ्गायां घोष इत्यत्र गङ्गापदं तीराभिधायि भवेत् तत्र तात्पर्यात्‡स्मारितस्वार्थप्रत्यासत्त्या ऽपि तदवगतेर्न तत्परस्यापि तदभिधानमिति यद्युच्येत तदितरत्रापि समानमुक्तेन क्रमेण§ तस्मादनेकान्तं तात्पर्यं न बीजं सामर्थ्यसाधने|| । न जातु ज्वलन्ति काष्ठानि पाकपराण्यपि¶ पाके साक्षात्समर्थानि किं तु ज्वलनएव तया द्वारा तत्सिद्धेः । तेषामतुल्यकक्षाणां प्राथम्यं न विशेषायोपयुज्यते येन पदानां तदर्थेभ्यः प्राथम्येनान्वितार्थधियं प्रति सामर्थ्यं कल्प्येत** । दर्शिता त्वतुल्यकल्पना रूपमात्राभिधानादन्विताभिधाने गौरवात् । न च पदार्थानामुपलभ्यमानाकाङ्क्षादिसहकारिणां विशिष्टार्थधीजन्मनि सामर्थ्यमपरं कल्पनीयं†† तेभ्य एव‡‡ तादृग्भ्यस्तदुत्पत्तेरुपपत्तेः । न चैते मानान्तरदृष्टा अर्था न विशिष्टार्थबुद्धे§§-

* प्रवृत्ताविति फले निमित्ते सप्तमी । प्रवृत्त्यर्थमभिमतवाक्यार्थावधारणम् । नान्तरीयकं प्रदर्शितदिशा ऽऽवश्यकम् ।

† शक्यविषयस्यापि तात्पर्यविषयत्वमात्रेण बाधाभ्युपगमे ऽतिप्रसङ्गं मन्यमानः शङ्कते ।

‡ न । अभिधायकत्वं तस्येष्टमिति शेषः ।

§ लक्षणयापि विशिष्टधीसंभवादिति भावः ।

|| शक्तिसाधने ।

¶ पाकसंपादकान्यपि । पाकेच्छयोपात्तान्यपीति यावत् ।

** अन्यथा ऽप्युपपद्यमानानां विशिष्टज्ञानानां प्रवृत्त्यादिहेतुकानुमितिप्राथमिकविषयत्वं शक्त्यनुमापने न पर्याप्तमित्यर्थः ।

†† प्रत्यक्षादिना ऽवगतानां अश्वेत्यखुरनिक्षेपशब्दश्रवणादीनां विशिष्टार्थबोधजनकत्वस्य प्रागुपपादितत्वात्तथैव पदैरुपस्थितानामप्यर्थानां विशिष्टानुभवजनकत्वाभ्युपगमे कारणत्वकल्पनाऽऽधिक्यं नेति भावः ।

‡‡ येभ्य एवेति २ पु॰ पाठः ।

§§ मानान्तरदृष्टानर्थानविशिष्टार्थबुद्धेरिति २ पु॰ पा॰ ।

दीयते । तथा हि यत एवानुमानभावमर्थापत्तिभावं वा समापन्ना दृष्टा विशिष्टार्थधियमादधाना यथा तथा आधास्यन्ति तामेव तत्पदैः* स्मारिताः सन्तः शब्दत्वमापन्नाः† अनुपपत्तिसंबन्धमात्रप्रभावितं च तात्पर्यमुपपादके न शक्तिमपेक्षते‡ गङ्गादिपदानां च काष्ठादीनां च तीरादौ पाकादौ च कल्पनाप्रसङ्गादित्युक्तम्§ । न च सर्वत्र स्वार्थपरित्यागेनैव लक्षणेत्यैकान्तिकम् । लक्षणीयानुरोधेनैव हि सर्वत्र परिग्रहपरित्यागौ । तद्यथा गङ्गायां घोष इत्यत्र गङ्गापदेन घोषप्रतिवासार्हतीरलक्षणया स्वार्थस्य गङ्गायास्त्यागः । दण्डिनो गच्छन्तीत्यत्र तु दण्ड्यदण्डिषु समूहिषु लक्ष्यमाणेषु तदन्तर्गतस्याविशेषाद्दण्डिशब्दार्थस्य परिग्रहः । तथा वेदे सृष्टीरुपदधातीत्यत्र गणिकानां|| लक्ष्यमाणत्वे तदन्तर्गतस्यापि सृष्ट्यर्थस्य परिग्रहः । एवमिहापि व्यतिषक्तावस्थायां लक्ष्यमाणायां तदन्तर्गतस्यार्थरूपस्यापि परिग्रहः तदग्रहे लक्ष्यमाणपरित्यागप्रसङ्गात्¶ । लक्षणालक्षणायोगादलक्षणेति चेद् न** । अलक्षणत्वात्†† । तत्रैतस्यात् । नेयं लक्षणा सा किलाभिधेयस्यार्थस्यायोग्यतया ऽनुपपद्यमाने वाक्यार्थसंबन्धे सति तत्संबन्धलब्धबुद्धिसन्निधौ वाक्यार्थसंबन्धार्हं भवत्यर्थान्तरे । तथा ऽऽह कश्चित् ।

वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तितः ।
तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥

---

* तत्पदैरिति २ पु॰ पाठः ।

† शब्दोपस्थितत्वप्रकारकानुसंधानविषयत्वम् ।

‡ पदार्थस्वरूपमात्रे ऽनुपपत्त्या सम्बन्धेन प्रतियोगित्वादिना च केवलमुपपादितं वाक्यार्थसंसर्गनिरूपितं तात्पर्यं पदे शक्तेर्गमकं न तामन्तराप्युपपत्तेरित्यर्थः ।

§ अन्वयांशे लक्षणामसहमानः शङ्कते ।

|| तद्गणपठितानां सृष्टिशब्दरहितानामपि । शाबरभाष्ये अ॰ १ पा॰ ४ सू २७ ।

¶ संसर्गिणः पदार्थस्य परित्यागे संसर्गमात्रप्रतीतेर्निष्प्रयोजनत्वेन संसर्गस्यापि परित्यागप्रसङ्गादित्यर्थः ।

वक्ष्यमाणस्वार्थान्यपदार्थबोधकत्वघटितलक्षणालक्षणस्य स्वार्थसम्बन्धे ऽभावादित्यर्थः

वक्ष्यमाणस्य लक्षणालक्षणस्य प्रदर्शयिष्यमाणदूषणेनाव्यापकत्वादिति भावः

न चौदनं पचति चैत्रः पिठर इत्यादौ चैत्रपिठरादीनामर्थानां वाक्यार्थे संबन्धानर्हत्वम् । न च तल्लक्षितया ऽन्वितावस्थाया अन्वयान्तरशालिता न चैवं लक्षणा तल्लक्षणाविरहादिति* । तत्किमिदानीं न लक्षणेयमित्यन्यलभ्यस्यापि शब्दार्थत्वमस्तु । न हि मासमग्निहोत्रं जुहोतीत्यत्राग्निहोत्रपदमलाक्षणिकमिति मुख्यं भवति । कर्मान्तरसादृश्येन गौण्या वृत्त्या तत्र प्रवृत्त्युपपत्तेर्न तदभिधानशक्तिकल्पनेति चेद् इहाप्युक्तया नीत्या ऽन्तरेणाप्यभिधानसामर्थ्यमन्वितावस्थाप्रतीत्युपपत्तेः कृतमभिधानशक्तितः । एवं तु न चेदियं पदप्रवृत्तिर्लक्षणा लक्षणमन्वेति भवतु तर्हि चतुर्थी दृष्टत्वाद् अस्तु वा लक्षणैव । नो खल्वेतल्लक्षणमप्रसिद्धवृत्त्यन्तरावतारप्रसङ्गात् । तस्मादेतद्वक्तव्यम् । तदिदमुच्यते मृष्यामहे वाच्यानुपपत्तित इति संबन्धवशप्राप्तस्येति च† न पुनर्वाक्यार्थसंबन्धेति चान्वयादिति च । अस्ति चेहापि लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनामर्थरूपमात्रपरत्वे पदानामनुपपत्तिः अर्थरूपसंबन्धवशप्राप्तता‡ चान्वितावस्थायाः । व्यापकं चैतल्लक्षणं लक्षणानामनवयवेन§ वैदिकीनां च लौकिकीनां चेति चतुरस्रम् । अभिधाशक्तित्वं च पदानां रूपमात्रप्रज्ञापने ऽपि न तेनोपपद्यते‖ । अपि नाम पदानि साक्षाद्व्यापारेण बोधयन्त्यर्थान्वाक्यार्थमितये तद्बोधनमिव वाक्यार्थं लक्षयिष्यन्ति । तदवस्थाभेदस्य तैः सहादृष्टचरत्वेन बुद्धावसंनिधानादलक्षणेति चेद् न । सामान्यतो¶ दर्शनात्पदार्थानां च तद्विशेषकत्वात् । नो खल्वन्वितेभ्यः पदार्थेभ्यो ऽन्यो ऽन्वितावस्थाविशेषः** । तथा चार्थस्वरूप-

* लक्षणायोपस्थिततीरादेः पश्चाद् बाधविषयत्वमिव प्रकृते लक्षितेन संसृष्टस्वार्थरूपेण प्रयोजनसिद्धेः पुनरन्वयान्तरस्यानुपयोगादनवस्थाप्रसङ्गाच्चेति भावः ।

† इति शब्दः २ पु॰ नास्ति ।

‡ अर्थसम्बन्धवत् प्राप्ततेति २ पु॰ पा॰ ।

§ साकल्येन ।

‖ स्वरूपमात्रोपस्थापनेन न परिसमाप्यते प्रयोजनवैकल्यादिति भावः ।

¶ अलक्षणानिवेशनसामान्यत इति २ पु॰ पा॰ ।

** तथा चेतरपदार्थान्वयेन विशेषरूपतामापन्नः संसृष्टोऽर्थः सामान्यविशेषभावसम्बन्धेन स्वरूपसम्बन्धीति तत्र लक्षणा युज्यत इति भावः । नो खल्वनन्वितेभ्यः पदार्थेभ्योऽन्यान्वितावस्थाविशेषेभ्यः इति २ पु॰ पा॰ ।

बोधनसामर्थ्याच्चाधिकं सामर्थ्यद्वयं* कल्पयिष्यते नाप्यभिधानशक्तेरेवान्व
र्यविषयत्वम् अर्थस्वरूपमात्रगोचरत्वे ऽपि तत्प्रतीत्युपपत्तेः । यदि पु
प्रमाणसंशयविपर्ययेभ्यो विधान्तरा†नुपगमाच्च पदार्थबोधः‡ शब्दव्यापा
जन्मोपेयते तर्हि स्मृतिरस्तु । न त्वेषा संस्कारोन्मेषमात्रप्रभवेति कृतमभि
धातृभावेन पदानाम्§ । तदुन्मेषे तदुपयोग इति चेदुन्तार्थो ऽप्यालोचित
स्वपदगोचरसंस्कारोद्बोधहेतुरिति सो ऽपि पदस्याभिधाता स्यात्
तदिदमनभिधातृत्वमनधिगतान्वयबोधनएव कल्प्यते पदानां नान्यथा||
अथैवंवादी पृष्टो व्याचष्टां को नु खल्वयमभिधाव्यापारः शब्दा
येनामी तदुन्तो ऽन्वयस्याभिधातारः । न तावत्परिस्पन्दस्तस्य मूर्तानुवि
धायिनो द्रव्ये विभुनि विभुगुणे वा शब्दे मूर्त्यभावेनासंभवात् । असर्व
गतद्रव्यपरिमाणं मूर्तिरिति हि पदार्थविदः¶ । नाप्यस्पन्दात्मा प्रयत्नादि
रिवाद्रश्यमानः प्रमाणाभावात् । अन्वयधियश्च कार्यस्य सति संसर्गा
संवेदने शब्दनिश्चयज्ञानादेवोत्पत्तेः** । तस्मात्स्वगोचरं विज्ञानमेव शब्द
नां व्यापारः स्वार्थबोधे । यथा ऽऽह भगवान्भाष्यकारः†† । शास्त्रं शब
विज्ञानादसंनिकृष्टे ऽर्थे विज्ञानमिति । स एव‡‡ स्वाभाविकशक्तिशालि
शब्दस्य स्वशक्त्या अर्थधीहेतुतया अभिधेति गीयते । शब्दाभासस्यैन्द्रि
कत्वे ऽपि रूपतः सामर्थ्योपधानेनाभिधात्वात्तस्य चातीन्द्रियत्वादतीन्द्रि

---

* प्रागुक्तं पदानामन्वयानुभवसामर्थ्यमर्थस्वरूपाणामन्वयानुभवसामर्थ्यं च
आद्यस्यान्यथा ऽप्युपपद्यमानत्वादन्त्यस्य क्लृप्तत्वाच्चेति भावः ।

† विधानान्तरेति २ पु॰ पा॰ ।

‡ पदार्थानुभवः ।

§ पदानामभिधातृत्वेन पर्याप्तं तावन्मात्रेण प्रयोजनसिद्धेरिति भावः ।
पर्याप्तयोः कृतमित्यमरः ।

|| अर्थवादादिवाक्येषु प्राशस्त्यादेरशक्यत्वे ऽपि संसर्गस्य प्राथमिकशक्तिग्रह
ऽवगतत्वात्संसर्गत्वेन संसर्गस्य शक्यतेति भावः ।

¶ वैशेषिकदर्शनप्रशस्तपादभाष्यटीकायामुदयनाचार्यकृतायां किरणावल्यां
र्थप्रकरणे ।

** शब्दजन्यस्वार्थनिश्चयेनैवान्वयधिय उपपन्नत्वाद् व्यापारान्तरकल्पना ऽन
र्थेति भावः ।

†† शाबरभाष्ये अ॰ १ पा॰ १ सू॰ ५ । ‡‡ स्वविषयकज्ञानरूपव्यापार

यत्वमास्थितवताभिधायाः* । न चेयं साक्षादर्थधियमाधत्ते येन न तत्साधिका स्यात् अपि तु संस्कारोद्बोधनक्रमेण । तथा च नार्थविषयविज्ञानं स्वपदगोचरसंस्कारोद्बोधनक्रमेण पदस्मरणमपि† विदधदभिधाशब्दगोचरः अपि तु शब्दविषयं विज्ञानं तस्य च तद्भावनियमात्‡ । लौकिकपरीक्षकाणां प्रयोगसंप्रतिपत्तेः । प्रणिधानादिष्वपाठाच्छब्दस्य न स्मारकत्वमिति चेन्न । तत्संबन्धात् । अथापि§ स्यात्परिगणिता हि स्मृतिहेतवः|| । प्रणिधाननिबन्धनाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माः प्रामाणिकैर्न चैतेषु किं चित्पदं तत्रार्थस्य स्मारकमिति चेत्तत्रार्थसंबन्धेन तदुपपत्तेः । संबन्धो हि स्मृतिहेतुषु पठितः । यतोऽन्तेवासिनो गुरुमृत्विजो याज्यं स्मरन्ति¶ । (स चास्ति शब्दार्थयोरौत्पत्तिको) वाच्यवाचकभाव इति तदनुभवाहितभावनासहितं शब्दविज्ञानमन्वितार्थप्रत्यायनप्रयुक्तं स्वार्थं स्मारयिष्यति । वाच्यवाचकत्वं च प्रत्याय्यप्रत्यायकत्वं तच्च विचार्यमाणं स्मार्यस्मारकत्वमेव । ननु सम्बन्धान्तरेणाध्यापकाध्यापनीयभावादिनाऽन्तेवासी स्मरति गुरुं न स्मारकत्वेनैव** तथेहापि सम्बन्धान्तरमनुसर्तव्यं न च तदस्ति तत्कथमस्य स्मारकत्वम् । अन्विताभिधाने त्वभिधेयसाहचर्यमेवास्यास्ति संबन्धान्तरमिति युज्यते

* शब्दगताभिधायां अर्थबोधानुकूलसामर्थ्यरूपायाः कुक्षौ प्रविष्टस्यार्थस्यातीन्द्रियत्वेन तद्विशेषितसामर्थ्यस्याप्यतीन्द्रियत्वमायातमित्यर्थः ।

† पदस्मरणमपीति २ पु॰ पा॰ ।

‡ शब्दविषयकज्ञानेन नियमतोऽर्थप्रत्ययस्यार्थज्ञानेन पदस्मरणनियमाभावादर्शनात् क्वाचित्कपदोपस्थापकव्यापारस्य नाभिधात्वं नियमेनोपस्थापकव्यापारस्यैवाभिधात्वादिति भावः ।

§ शब्दस्य तत्स्मारकत्वमिति चेन्न तत्सम्बन्धादिति २ पु॰ पा॰ । यथापीत्यत्र तथापीति च ।

|| गौतमसूत्रं अ॰ ३ आ॰ २ सू॰ ४४ ।

¶ स्मारयिष्यन्तीति ३ पु॰ पा॰ ( ) एतच्चिह्नान्तर्गतश्च पाठः २ पु॰ नास्ति ।

** स्मार्यस्मारकत्वेनैवेति २ पु॰ पा॰ ।

स्मारकत्वं पदानाम् । अथान्विताभिधाने ऽप्यन्वितप्रत्यायनाय* नैकमस्ति संबन्धान्तरं पदानां दृष्टा हि चक्षुरादयो धूमादयश्चार्थसंनिकर्षलक्षणनियतसाहित्यादिलक्षणेन संबन्धान्तरेण प्रत्याययन्तो यथायथमर्थान् । यदुच्येत विना ऽपि संबन्धान्तरमौत्पत्तिकार्थप्रत्यायनशक्त्या वृद्धव्यवहारोन्नीतया प्रत्यायनमिति तदत्रापि समानम् । इहापि सादृश्यस्यैव स्मृतिजननशक्त्या वृद्धव्यवहारोन्नीतया स्मारकत्वमस्तु पदानामर्थरूपे तच्च स्वज्ञानमेव तस्य चाभिधात्वमुपपादितमधस्तात् । तस्मादभिधातृत्वमपि नान्विताभिधानइति† कल्पनालाघवादाकाङ्क्षादिलक्षणसहकारिप्रत्यासत्तेश्च समभिव्याहृतपदस्मारितैः पदार्थैः प्रत्यासत्त्या गम्यमानो वाक्यार्थो लाक्षणिकः शाब्दश्चेति‡ रमणीयम् । तस्मात्सूक्तं§ पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थमवगमयन्तीति ॥

> तत्त्वबिन्दुपरामर्शपुष्टानां बुद्धिवीरुधः ।
> वाक्यार्थधीसुमनसः पुरुषार्थफलप्रदाः ॥
> वाक्यार्थमितये पुंसां भ्रमसंतमसच्छिदा ।
> इन्दुनेवामुना मार्गो दर्शितस्तत्त्वबिन्दुना ॥

इति श्रीवाचस्पतिमिश्रविरचितस्तत्त्वबिन्दुः समाप्तः ॥

---

* अन्वितानुभवनिष्पत्तये । सामान्यतो ऽन्वितस्योपस्थितत्वेनानुभवविषयताया असंभवाद्विशेषस्य च सामान्याद्भिन्नत्वेन सम्बन्धान्तरानुपपत्तेरिति भावः ।

† अन्विताभिधानवादे प्रदर्शितदिशा पदानामन्विताभिधातृत्वं न सिध्यतीत्यर्थः ।

‡ संसर्गो लक्षणागम्यः स्वज्ञानादिपरंपरया पदजनित त्वेन शाब्दश्चेत्यर्थः ।

§ शाबरभाष्ये अ० १ पा० १ सू० २५ ॥